सा. भा.।—'प्रति त्यमि'ति नवर्चं द्वितीयं सूक्तम्। ऋषिच्छन्दसी पूर्ववत्। देवता त्वनुक्रम्यते—'प्रति त्यमाग्निमारुतमि'ति। कारीरीष्टौ 'प्रति त्यमि'त्येषा धाय्या। तथा च सूत्रितम्—'वर्षकामेष्टिः कारीरी' तस्यां 'प्रति त्यं चारुमध्वरमीळे अग्निं स्ववसं नमोभि'रिति धाय्ये (अ° २.१३. १,२) इति॥ तामेतां सूक्तगतां प्रथमामृचमाह—

त्यच्छब्दः सर्वनाम तच्छब्दपर्यायः। हे अग्ने, यो यज्ञश्चारुः—अङ्गवैकल्यरहितः, त्यम्—तथाविधं चारुमध्वरं प्रतिलक्ष्य गोपीथाय—सोमपानाय प्रहूयसे—प्रकर्षेण त्वं हूयसे। तस्मादस्मिन्नध्वरे त्वं मरुद्भिः सह देवविशेषैः सह आगहि—आगच्छ। सेयमृक् यास्केनैवं व्याख्याता—'तं प्रति चारुमध्वरं सोमपानाय प्रहूयसे सोऽग्ने मरुद्भिः सहागच्छ' (नि° १०. ३६) इति। प्रति निपात आद्युदात्तः। त्यम्। 'त्यदादीनामः' (पा° ७.२.१०२) प्रातिपदिकस्वरः। चारुम्। 'दृसनिजनिचरी'त्यादिना (उ° १.३) ञुण्। 'अत उपधायाः' इति वृद्धिः। ञित्त्वादाद्युदात्तः। गोपीथाय। 'निशीथगोपीथावगथाः' (उ २.९) इति थक्प्रत्ययान्तो निपातितः। प्र। निपातस्वरः॥१॥

गोपीथाय—Max Müller translates—'for a draught of milk', keeping to the literal sense of the word, whereas Yāska and Sāy. explain it as 'for drinking of Soma.'

Sāy. elsewhere (on v. 65. 6) explains गोपीथ as meaning 'sacrifice in which there is drinking of Soma.' *cf.* (गौः सोमरसः तस्य पानं यस्मिन् सः गोपीथः यज्ञः) Ujjvaladatta in his commentary on the Uṇādisūtra explains गोपीथ by तीर्थ.

Roth assigns two meanings to the word:—(1) Protection, (2) 'Draught of milk.' The word गो in the Vedas is very often used in the sense of the products of the cow, *viz.* milk and curds. As the libation of Soma-juice was commonly mixed with milk, गोपीथ came to mean—'drinking of Soma' (सोमपान)।

2

नहि। देवः। न। मर्त्यः। महः। तव। क्रतुम्। परः॥
मरुत्ऽभिः। अग्ने। आ। गहि॥२॥

Nor god nor man has power over a rite (dedicated) to thee, who art mighty. Come, Agni, with the Maruts.—2.

सा. भा.।—हे अग्ने, महः—महतस्तव सम्बन्धि क्रतुम्—कर्मविशेषमुल्लङ्घ्य परो नहि—उत्कृष्टो देवो न भवति खलु। तथा मर्त्यो मनुष्यश्च परो न भवति। ये मनुष्यास्त्वदीयं क्रतुमनुतिष्ठन्ति ये च देवास्त्वदीये क्रताविज्यन्ते त एवोत्कृष्टा इत्यर्थः। मरुद्भिरित्यादि पूर्ववत्। नहि।

'एवमादीनामन्त' (फि॰ ४. १४) इत्यन्तोदात्तः। देवः। पचाद्यजन्तश्चित्त्वादन्तोदात्तः। महः। महतस्तलोपश्छान्दसः। 'बृहन्महतोरुपसंख्यानमि'ति (वार्त्तिकम्) विभक्तेरुदात्तत्वम्। तव 'युस्मदस्मदोर्ङसी'त्याद्युदात्तत्वम् (पा॰ ६. १. २११)। क्रतुम्। कृञः कतुः (उ॰ १. ७८) प्रत्ययाद्युदात्तत्वम्। गहि। गम्लृ सृप्लृ गतौ। लोटः सेर्हिः। 'बहुलं छन्दसी'ति शपो लुक्। 'अनुदात्तोपदेशे'त्यादिनानुनासिकलोपः। तस्या'सिद्धवदत्राभादि'त्यसिद्धत्वाद् 'अतो हे'रिति लुङ् न भवति। निघातः ॥२॥

क्रतुम्—action, *i.e.*, sacrificial ceremony—Ngh. 2. 1.; Nir. 3. 1; wisdom—Ngh. 3. 9. In the Sat. Br. (4. 1. 4. 1) there is a def. of क्रतु—'स यदेव मनसाकामयत इदं मे स्यादिदं कुर्वीयेति स एव क्रतुः'—Geldner, Ved. Stu., i. 267.

### 3

ये । महः । रजसः । विदुः । विश्वे । देवासः । अद्रुहः ॥
मरुत्ऽभिः । अग्ने । आ । गहि ॥३॥

Who all are divine, and devoid of malignity, and who know (how to cause the descent) of great waters: come Agni, with the Maruts.—3.

सा. भा ।—हे अग्ने, ये मरुतो महो रजसः—महत उदकस्य वर्षणप्रकारं विदुस्तैर्मरुद्भिरित्यन्वयः। कीदृशा मरुतः। विश्वे—सर्वे सप्तविधगणोपेताः। 'सप्तगणा वै मरुत' इति (तै॰ स॰ २.२.११.१) श्रुतेः। देवासः—द्योतमानाः। अद्रुहः—द्रोहरहिताः। वर्षणेन सर्वभूतोपकारित्वात्। तथा चोपरिष्टादाम्नायते—'उदीरयथा मरुतः समुद्रतो यूयं वृष्टिं वर्षयथा पुरीषिण'इति। शाखान्तरेऽपि मन्वान्तरस्यं ब्राह्मणमेवमाम्नायते—'मरुतं पृषयन्तः स्थे'त्याह मरुतो वै वृष्ट्या ईशत' इति। रजःशब्दो यास्केन बहुधा व्याख्यातः—'रजो रजतेर्ज्योती रज उच्यते उदकं रज उच्यते लोका रजांस्युच्यन्तेऽसृगहनी रजसी उच्येते' (नि॰ ४. १९) इति। रजसः। 'नब्विषयस्यानिसन्तस्ये'त्याद्युदात्तः। विदुः। विद ज्ञाने। 'विदो लटो वा' (पा॰ ३. ४. ८३) इति झेरुसादेशः। प्रत्ययस्वरः। यद्वृत्तयोगान्निघाताभावः। विश्वे। विशेः क्वन्नन्तस्य नित्त्वादाद्युदात्तत्वम्। देवासः। 'आज्जसेरसुक्'। देवशब्दः पचाद्यजन्तः। चित्त्वादन्तोदात्तः। अद्रुहः। सम्पदादित्वाद्भावे क्विपि बहुव्रीहौ 'नञ्सुभ्यामि'त्यन्तोदात्तत्वम्। कर्तरि वा क्विप्। तत्पुरुषे ह्यव्ययपूर्वपदप्रकृतिस्वरत्वं स्यात्। न च कृदुत्तरपदप्रकृतिस्वरत्वम्। यतो नञ् न गतिर्न च कारकम् इति ॥३॥

महो रजसः—Western scholars are of opinion that रजस् denotes the region of the atmosphere between heaven and earth. Peterson renders by

'great sky.' But Sāyaṇa's meaning 'water', here, quite suits the text as many texts ascribe to the Maruts or winds, a main agency in the fall of rain; *cf.* 'Maruts, you have risen from the ocean; taking the lead, you have sent down rain,' v. 55. 5. For this sense (water) of the word रजस्, *cf.* 'यो अन्तरिक्षे रजसो विमानः', who generated water in the firmament, x. 121. 5. (Hymn No. 27).

4

ये । उग्राः । अर्कम् । आनृचुः । अनाधृष्टासः । ओजसा ॥
मरुत्ऽभिः । अग्ने । आ । गहि ॥४॥

Who are fierce, and send down rain, and are unsurpassed in strength: come, Agni, with the Maruts.—4.

सा. भा. ।—ये मरुत उग्राः—तीव्राः सन्तोऽर्कम्—उदकमानृचुः—अर्चितवन्तः । वर्षणेन सम्पादितवन्त इत्यर्थः । तैर्मरुद्भिरित्यन्वयः । कीदृशा मरुतः । ओजसा—बलेनानाधृष्टासः—अतिरस्कृताः । सर्वेभ्योऽपि प्रबला इत्यर्थः । अर्कशब्दस्योदकवाचित्वं वाजसनेयिन आमनन्ति—'आपो वा अर्क' इति (शत° ब्रा° १०.६.५.२)। तन्निर्वचनञ्च त एवमामनन्ति—'सोऽर्चन्नचरत्तस्यार्चत आपोऽजायन्तार्चते वै मे कमभूदिति तदेवार्कस्यार्कत्वमि'ति (शत° ब्रा° १० ६.५.१)। जगत् सृष्टा हिरण्यगर्भ उदकं स्रष्टुमुद्युक्तोऽर्चन् उदकं सत्यसंकल्पमहिमप्रख्यापनेन स्वात्मानं पूजयन्नचरत्। तथा पूजयतो हिरण्यगर्भस्य सकाशादुदकमुत्पन्नम्। तदानीमर्चतो मत्तः कमभूदित्यवोचत्। तेनोदकस्यार्कनाम निष्पन्नमित्यर्थः। आनृचुः। अर्चतेर् 'अपस्पृधेथामि°'त्यादिना (पा° ६. १. ३६) निपातनम्। प्रत्ययस्वरः। यद्वृत्तयोगान्न निघातः। अनाधृष्टासः। अव्ययपूर्वपद-प्रकृतिस्वरत्वम्। ओजसा। 'उब्जेर्बलोपश्च' (उ° ४.१९.१) इत्यसुन्। नित्त्वादाद्युदात्तः ॥४॥

अर्कम्—Peterson following Max Müller translates 'अर्कमानृचुः' as 'sing their song.' Yāska in Nir. 5. 4, gives the following mgs. of अर्क—god, mantra, food and tree ('अर्को देवो भवति यदेनमर्चन्ति, अर्को मन्त्रो भवति यदेनेनार्चन्ति, अर्कमन्नं भवति अर्चति भूतानि, अर्को वृक्षो भवति स वृतः कटुकिम्ने'ति)। अर्क occurs first in ṚV. i. 10. 1: 'गायन्ति त्वा गायत्रिणः। अर्चन्त्यर्कमर्किणः', where Sāy. rightly explains अर्कम् as अर्चनीयम् इन्द्रम्, adorable Indra; and in other places as मन्त्र, which we think to be more appropriate than Max Müller's meaning of 'song.' The text cited by Sāy. from the VS. in support of the sense (उदक) given here deserves particular notice, and should, in no way, be slighted away, as some Western scholars (e.g., Peterson) have attempted to do.

5

ये । शुभ्राः । घोरऽवर्पसः । सुऽक्षत्रासः । रिशादसः ॥
मरुत्ऽभिः । अग्ने । आ । गहि ॥५॥

Who are brilliant, of terrific forms, who are possessors of great wealth, and are devourers of the malevolent: come, Agni, with the Maruts.—5.

सा. भा. ।—ये मरुतः शुभ्रत्वादिगुणोपेतास्तैर्मरुद्भिरित्यन्वयः । शुभ्राः—शोभमानाः । घोरवर्पसः—उग्ररूपधराः । सुक्षत्रासः—शोभनधनोपेताः । रिशादसः—हिंसकानां भक्षकाः । मघमित्यादिष्वष्टाविंशतिसंख्याकेषु धननामसु 'क्षत्रं भग' इति पठितम् (निघ २.१०)। शुभ्राः । 'स्फायितञ्ची'त्यादिना शुभेरौणादिको रक्प्रत्ययः । प्रत्ययस्वरः । घोरवर्पसः । घोरं वर्पो येषाम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । सुक्षत्रासः । बहुव्रीहौ 'नञ्सुभ्या'मि'त्युत्तरपदान्तोदात्तत्वम् । 'आद्युदात्तं द्व्यच् छन्दसि' (पा ६.२.११९) इत्येव तु न भवति क्षत्रशब्दस्यान्तोदात्तत्वात् । रिशन्ति हिंसन्तीति रिशाः, तानदन्तीति रिशादसः । सर्वधातुभ्योऽसुन्प्रत्ययः । नित्-स्वरेणोत्तरपदमाद्युदात्तम् । कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते ॥५॥

रिशादस.—This is a frequent epithet of the Maruts, also applied to other gods, *cf.* i. 26. 4;—39. 4;—64. 5;—77. 4;—186. 8; v. 60. 7; vii. 59. 9; viii. 8. 17;—27. 10; ix. 69. 10; x. 77. 3, 5; VS. iii. 44, etc. Yāska explains the term as 'the destroyers or devourers of the malignant, or those who seek to injure others ( रेशयदारिणः, or रेशयदासिनः[1])', Nir. 6. 14.

6

ये नाकस्य । अधि । रोचने । दिवि । देवासः । आसते ॥
मरुत्ऽभिः । अग्ने । आ । गहि ॥६॥

Who are divinities abiding in the radiant heaven above the sun: come, Agni, with the Maruts.—6.

सा. भा. ।—ये मरुतो नाकस्याधि—दुःखरहितस्य सूर्यस्योपरि दिवि—द्युलोके रोचने—दीप्यमाने ये देवासः—स्वयमपि दीप्यमाना आसते । तैर्मरुद्भिरित्यन्वयः । नाकस्य । कं

[1] The latter is the rdg. adopted by Durgācārya.

सुखम्। तदस्मिन्नास्त्यसावक इति बहुव्रीहिं कृत्वा पश्चान्नञा न अको नाक इति नञ्तत्पुरुषः। 'नलोपो नञः' (पा॰ ६. ३. ७३) इति नलोपो न भवति। 'नभ्राण्नपादि'त्यादिना (पा. ६. ३. ७५) प्रकृतिभावात्। 'तत्पुरुषे तुल्यार्थे'त्यादिना (पा॰ ६. २. २.) अव्ययपूर्वपद-प्रकृतिस्वरत्वेनोदात्तत्वम्। प्रथमतस्तत्पुरुषं कृत्वा पश्चाद्बहुव्रीहावुत्तरपदान्तोदात्तत्वं स्यात्। अधिशब्द उपर्यर्थे। उपसर्गप्रतिरूपको निपातः। रोचने। रुच दीप्तौ। 'अनुदात्तेतश्च हलादे'रिति (पा॰ ३. २. १४९) युच्। 'चित' इत्यन्तोदात्तत्वम्। दिवि। 'ऊडिदमि'त्यादिना विभक्तेरुदात्तत्वम्। देवासः। 'आज्जसेरसुगि'त्यसुक्। आसते। आस उपवेशने। अनुदात्तेत्त्वादात्मनेपदम्। झस्यादादेशः। 'अदिप्रभृतिभ्यः शप' इति शपो लुक्। अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वम्। यद्वृत्तयोगान्न निघातः ॥६॥

नाकस्य रोचने दिवि—To avoid tautology, Sāy. explains नाकस्य as सूर्यस्य, and has taken the above phrase to mean—'in the radiant heaven above the sun.' In the Nirukta, the word नाक is clearly mentioned as a syn. of the sun; see 'नाक आदित्यो भवति', Nir. 2. 14; *cf.* also 'येन द्यौः उग्रा पृथिवी च दृळ्हा येन स्वः स्तभितं येन नाकः',—by whom heaven and the *solar sphere* were fixed, x. 121. 5 (Hymn No. 27). Max Müller takes नाक here in the sense of 'firmament' and दिव् in the sense of heaven. Peterson renders after him—'on the shining arch of heaven.'

7

ये । ईङ्खयन्ति । पर्वतान् । तिरः । समुद्रम् । अर्णवम् ॥
मरुत्ऽभिः । अग्ने । आ । गहि ॥७॥

Who scatter the clouds and agitate the sea (with waves); come, Agni, with the Maruts.—7.

सा. भा.।—ये मरुतः पर्वतान्—मेघानीङ्खयन्ति—चालयन्ति। तथार्णवम्—उदकयुक्तं समुद्रं तिरः। कुर्वन्तीति शेषः। निश्चलस्य जलस्य तरङ्गाद्युत्पत्तये चालनं तिरस्कारः। तैर्मरुद्भिरित्यन्वयः। ईङ्खयन्ति। 'उख उखी'त्यादावीखिर्गत्यर्थः। 'हेतुमति चे'ति (पा॰ ३. १. २६) णिच्। 'इदितो नुम् धातो'रिति नुम्। णिजन्तधातो'श्चित' इत्यन्तोदात्तत्वम्। शपः पित्त्वादनुदात्तत्वम्। तिङश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते। पर्वतान्। पुर्व पर्व मर्व पूरणे। औणादिको 'भृमृदृशी'त्यादिनातच्-प्रत्ययः। प्रत्ययस्वरः ॥७॥

पर्वतान्—a syn. of मेघ, cloud, Ngh. 1. 10; this word in the sense of cloud, without any further explanation is clear from many passages. .... The English word cloud itself has been identified with the Anglo-Saxon *clud*, rock. See Justi, *Orient and Occident*, Vol. II, p. 62.

समुद्रम्—Usually in the Vedas it is a syn. of अन्तरिक्ष, Ngh. 1. 3.

8

आ । ये । तन्वन्ति । रश्मिऽभिः । तिरः । समुद्रम् । ओजसा ॥
मरुत्ऽभिः । अग्ने । आ । गहि ॥८॥

Who spread (through the firmament), along with the rays (of the sun), and, with their strength, agitate the ocean: come, Agni, with the Maruts.—8.

सा. भा. ।—ये मरुतो रश्मिभिः—सूर्यकिरणैः सह आतन्वन्ति—आप्नुवन्ति । आकाशमिति शेषः । किञ्च ओजसा—स्वकीयबलेन समुद्रं तिरस्कुर्वन्ति तैर्मरुद्भिरित्यन्वयः । तन्वन्ति । तनु विस्तारे । झो झोऽन्तः । 'तनादिकृञ्भ्य उः' (पा. ३.१.७९) । 'सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य' इति तिङ एवाद्युदात्तत्वम् । समुद्रम् । उन्दी क्लेदने । 'स्फायितञ्ची'ति रक् । समासे कृदुत्तरपदप्रकृतिस्वरत्वम् ॥८॥

9

अभि । त्वा । पूर्वऽपीतये । सृजामि । सोम्यम् । मधु ॥
मरुत्ऽभिः । अग्ने । आ । गहि ॥८॥

I pour out the sweet Soma juice, for thy drinking, (as) of old. Come, Agni, with the Maruts.—9.

सा. भा. ।—हे अग्ने पूर्वपीतये—पूर्वकाले प्रवृत्ताय पानाय त्वा—त्वां प्रति सोम्यं मधु—सोमसम्बन्धिनं मधुररसमभिसृजामि । सर्वतः सम्पादयामि । अतस्त्वं मरुद्भिः सहात्रागच्छ । अभि । 'एवमादीनामन्त' (फि. ४. १४) इत्यन्तोदात्तत्वम् । 'त्वामौ द्वितीयाया' इति (पा. ८. १. २३) त्वादेशः सर्वानुदात्तः । पूर्वपीतये । पूर्वा चासौ पीतिश्च । 'पुंवत्कर्मधारये'त्यादिना (पा. ६. ३. ४२) पुंवद्भावः । सृजामि । सृज विसर्गे । मिपः पित्त्वादनुदात्तत्वम् । विकरणस्वरः । सोम्यम् । 'सोममर्हती'ति यः, प्रत्ययस्वरेणान्तोदात्तः । मधु । 'फलिपाटिनमी'-त्यादिना उ-प्रत्ययः । निदित्यनुवृत्तेराद्युदात्तत्वम् । अन्यद् गतम् । अत्र यास्कः—'अभि सृजामि त्वा पूर्वपीतये पूर्वपानाय सोम्यं मधु सोममयं सोऽग्ने मरुद्भिः सहागच्छ' (नि. १०.३७) इति ॥९॥

## ṚBHUS

### *Characteristic Features*

The Ṛbhus[1] were originally mortals, the sons of Sudhanvan, a descendant of Aṅgiras. They are severally named Ṛbhu, Vibhvan, and Vāja, and styled collectively Ṛbhus after the name of the eldest. They are addressed in eleven entire hymns in the ṚV. Through their assiduous performance of good works[2] or sacrifices (Nir. 11. 16; ṚV. iii. 60. 1. etc.) and for artistic skill,—they attained immortality, exercised superhuman powers, and became entitled to receive praise, adoration and a share in the sacrifice (i. 161. 6). They are supposed to dwell in the solar sphere and are sometimes identified with the rays of the sun.[3] They are styled, in some passages, the leaders of the sacrifice (i. 110. 6. 8).

They obtained the friendship of Indra by their wondrous, skilful deeds (iii. 60. 3; iv. 35. 7, 9). They are the artificers of the gods. They made the car for the Aśvins, and fashioned the two horses of Indra (i. 20. 2; iv. 33. 10). One of their minor feats consists in their having united the mother-cow with her calf (i. 110. 8;—111. 1). Their another feat frequently alluded to is that they re-juvenated their frail, aged parents (i. 20. 4;—110. 8;—111. 1; iv. 33. 2, 3;—35. 5).

[For more details *vide* Muir, OST. V. p. 284; Winternitz, Hist. of Ind. Lit. I, p. 78; Macdonell, Ved. Mythology, pp. 131 ff; Kaegi, 'The Rigveda', pp. 37 ff.].

---

[1] Etymology of the name is given in Nir. 11. 15: They are so named, because they shine widely or much, fr. उरु *much*, and √भा *to shine*, or because they shine with sacrifice (ऋतेन भान्ति भवन्ति वा)।

[2] *svapasaḥ* (*su-apas*), i. 161. 6.

[3] 'आदित्यरश्मयोऽप्यृभव उच्यन्ते', cited by Prof. Wilson, RV. Transl., Vol. I, p. 285 f.n.

## Hymn No. 13

## ṚBHUS

i. 111

1

तक्षन् । रथम् । सुऽवृतम् । विद्मनाऽअपसः ।
तक्षन् । हरी इति । इन्द्रऽवाहा । वृषण्वसू इति वृषण्ऽवसू ॥
तक्षन् । पितृऽभ्याम् । ऋभवः । युवत् । वयः ।
तक्षन् । वत्साय । मातरम् । सचाऽभुवम् ॥१॥

The Ṛbhus, possessed of skill in their work, constructed (for the Aśvins), a well-built car: they framed the vigorous horses bearing Indra; they gave youthful existence to their parents; they gave, to the calf, its accompanying mother.—1.

सा. भा.।—'तक्षन्नि'ति पञ्चर्चं षष्ठं सूक्तं कुत्सस्यार्षमार्भवम्। पञ्चमी त्रिष्टुप्। शिष्टाश्चतस्रो जगत्यः। तथा चानुक्रान्तम्—'तक्षन् पञ्चान्त्या त्रिष्टुबि'ति। अग्निष्टोमे वैश्वदेवशस्त्र इदं सूक्तमार्भवं निविद्धानम्। सूत्रितञ्च—'तक्षन् रथमयं वेनश्चोदयत् पृश्निगर्भा' (आ° ५.१८) इति॥

विद्मनापसः—उत्कृष्टेन ज्ञानेन निष्पाद्यकर्माणो लाभवत्कर्माणो वा ऋभवो रथमश्विनोरारोहणार्थं सुवृतम्—शोभनवर्तनं सुचक्रं वा तक्षन्—अकुर्वन्। तथेन्द्रवाहा—इन्द्रस्य वाहनभूतौ हरी—हरणशीलावेतत्संज्ञकावश्वौ तक्षन्—कृतवन्तः। कीदृशौ? वृषण्वसू—सेचनसमर्थेन दृढतरेण धनेन बलेन वा युक्तौ। अपि च पितृभ्यां स्वकीयाभ्यां मातापितृभ्यां वृद्धाभ्यां युवत्—यौवनोपेतं वयः—आयुरृभवस्तक्षन्—कृतवन्तः। तथा वत्साय मातरं गां सचाभुवम्—सहभुवं सह वर्तमानां तक्षन्—अकुर्वन्। तक्षन्। तक्ष त्वक्ष तनूकरणे। लङि 'बहुलं छन्दस्यमाङ्योगेऽपी'त्यडभावः (पा° ६.४.७५)। सुवृतम्। शोभनं वर्तत इति सुवृत्। वृतु वर्तने। 'क्विप् चे'ति (पा° ३.२.७६) क्विप्। विद्मनापसः। विद ज्ञाने। 'अन्येभ्योऽपि दृश्यन्ते' (पा° ३.२.७५) इति दृशिग्रहणाद्भावे मनिन्। संज्ञापूर्वकस्य विधेरनित्यत्वाद् गुणाभावः। बहुलवचनादलुक्। यद्वा विद्लृ लाभे। औणादिको भावे मक्। ततः पामादिलक्षणो न-प्रत्ययः। विद्मनं लाभवदपः कर्म येषाम्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। छान्दसः पूर्वसवर्णदीर्घः। इन्द्रवाहा। इन्द्रं वहत इतीन्द्रवाहौ। 'वहश्चे'ति (पा. ३.२.६४) ण्वि-प्रत्ययः। 'अत उपधायाः' इति वृद्धिः। 'सुपां

सुलुगि'ति विभक्तेराकारः। वृषण्वसू। वृष सेचने। 'कनिन्युवृषितक्षि'इत्यादिना कनिन्। नित्त्वादाद्युदात्तत्वम्। 'वृषण्वस्वश्वयोरुपसंख्यानम्' इति वसु-शब्द उत्तरपदे वृषण्भावः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। युवत्। अत्र युवत्शब्दः सामर्थ्यात् प्रवृत्तिनिमित्तं युवत्वमात्रमाचष्टे। तदस्मिन्नस्तीति युवत्। छान्दसो वलोपः ॥१॥

तक्षन्—for अतक्षन्; the verb has reference to the manual skill of the Ṛbhus.

रथम्—*r/s.* apparently to the car of the Aśvins, fashioned by the Ṛbhus, *cf.* 'तक्षन्नासत्याभ्यां परिज्मानं सुखं रथम्', i. 20. 3; also *cf.* i. 161. 3, 6; iv. 33. 8; —36. 1; x. 39. 12. सुवृतम्—a characteristic epithet of the car of the Aśvins, *cf.* 'अतो रथेन सुवृता न आगतम्', i. 47. 7.

विद्मनापसः—The phrase occurs once more as an epithet of the Maruts, in i. 31. 1, where Sāy. explains the expression: 'ज्ञानेन व्याप्तकर्माणो ज्ञातकर्माणो वा', 'the wise, all-discerning'—Wilson; 'active through wisdom'—Griffith.

तक्षन् पितृभ्याम् ऋभवो युवद्वयः—They made their aged parents young; *cf.* 'या जरन्ता युवशा ता कृणोतन', i. 161. 7; also 'पुनर्ये चक्रुः पितरा युवाना सना यूपेव जरणा शयाना—they rejuvenated their parents who lay like decaying posts, iv. 33. 3; this feat of theirs is mentioned frequently in the ṚV.: *vide*, i. 20. 4;—110. 8,—161. 3; iv. 33. 2;—35. 5;—36. 3, etc.

वत्साय मातरं सचाभुवम्—(they) made the mother-cow a constant companion of the calf, *i.e.*, united the calf with the mother-cow; this is also alluded to in i. 110. 8; As for the phrase सचाभुवम्, *cf.* 'वज्रमिन्द्र सचाभुवम्', Vajra, Indra, thy *constant companion*, i. 131. 3; सचा=सह. Nir. 5. 5, *cf.* 'वसुभिः सचा भुवा', ii. 31. 1; also *cf.* v. 56. 8; vi. 45. 22;—57. 4.

वृषण्वसू—This compd. occurs once more in ii. 41. 8, as an epithet of the Aśvins, where it is explained by Sāy. as धनस्य वर्षितारौ, the showerers of wealth.

2

आ | नः | यज्ञाय | तक्षत | ऋभुऽमत् | वयः।

क्रत्वे | दक्षाय | सुऽप्रजावतीम् | इषम् ॥

यया | क्षयाम | सर्वऽवीरया | विशा।

तत् | नः | शर्धाय | धासथ | सु | इन्द्रियम् ॥२॥

Prepare fully, for our sacrifice, resplendent sacrificial food, and, for our rite, and for our strength, such nutriment as may be the cause

of excellent progeny; so that we may live (surrounded) by vigorous descendants. Such wealth do you confer upon us, for our benefit.—2.

सा. भा. ।—हे ऋभवः, नः—अस्माकं यज्ञाय—यज्ञार्थम्, ऋभुमत्—उरुभासनयुक्तं वयः—हविर्लक्षणमन्नमातक्षत—आ समन्तादुत्पादयत। एतदेव विवियते। क्रत्वे—क्रतवेऽस्मदीयाय कर्मणे दक्षाय—बलाय च। तादर्थ्ये चतुर्थी। एतदुभयार्थं सुप्रजावतीम्—शोभनाभिः पुत्रपौत्रादिलक्षणाभिः प्रजाभिर्युक्ताम् इषम्—अन्नम्। आतक्षतेति शेषः। अपि च सर्ववीरया—सर्वैर्वीरैः पुत्रादिभिरुपेतया विशा—प्रजया सह यथा—येन प्रकारेण क्षयाम—सुखेन निवसाम। तत्—तादृशमिन्द्रियम्। धनमेतत्। धनं नोऽस्मभ्यं शर्धाय—बलार्थं सुधासथ—सुष्ठु धत्त। प्रयच्छतेत्यर्थः। ऋभुमत्। उरु भातीति नैरुक्तव्युत्पत्त्या ऋभुशब्दः प्रकाशनात्मवाची। 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम्। क्रत्वे। 'जसादिषु छन्दसि वा वचनम्' इति 'घेर्ङिति' इति गुणाभावे यणादेशः। क्षयाम। क्षि निवासगत्योः। व्यत्ययेन शप्। धासथ। धाञो लेट्यडागमः। 'सिब्बहुलं लेटि' इति सिप्। 'अन्येषामपि दृश्यते' इति संहितायां दीर्घत्वम् ॥२॥

3

आ । तक्षत । सातिम् । अस्मभ्यम् । ऋभवः ।
सातिम् । रथाय । सातिम् । अर्वते । नरः ॥
सातिम् । नः । जैत्रीम् । सम् । महेत । विश्वहा ।
जामिम् । अजामिम् । पृतनासु । सक्षणिम् ॥३॥

Ṛbhus, conductors (of sacrifice), bestow ample sustenance upon us, upon our chariots, upon our horses. Let every one daily acknowledge our victorious wealth; and may we triumph, in battle, over our foes, whether strangers or kinsmen.—3.

सा. भा. ।—हे नरः—यज्ञस्य नेतार ऋभवः, अस्मभ्यमनुष्ठातृभ्यः सातिम्—सम्भजनीयमन्नं धनं वा, आतक्षत—आ समन्तात् कुरुत। तथास्मदीयाय रथाय—रंहणशीलाय पुत्रादये रथायैव वा सातिम्—सम्भजनीयं धनमातक्षत। तथार्वते—अश्वाय सातिं सम्भजनीयमन्नं धनं वाश्वयोग्यम्। आतक्षतेत्येव। किञ्च विश्वहा—सर्वेष्वहःसु नोऽस्माकं जैत्रीम्—जयशीलामपरिमितत्वेन सर्वाधिकां सातिम्—सम्भजनीयं धनं सम्महेत—सर्वो जनः सम्यक् पूजयतु। वयं च पृतनासु—संग्रामेषु जामिम्—सहजातमजामिम्—सहानुत्पन्नं शत्रुं वा सक्षणिम्—अस्मानभिभवन्तं युष्मत्प्रसादाद् अभिभवेमेति शेषः। सातिम्। 'ऊतियूतिजूतिसाती'त्यादिना क्तिन उदात्तत्वम्। महेत। मह पूजायाम्। सक्षणिम्। षह अभिभवे। औणादिकः सनि-प्रत्ययः। इत्व-कत्व-षत्वानि ॥३॥

जामिम्—The word occurs many times in the ṚV. It appears originally to have meant 'related in blood', frequently used to mean 'sister', i. 65. 7; x. 10. 10, etc.; *cf.* also 'अभ्रातर इव जामयः', AV. 1. 17. 1; for the sense of *relation cf.* 'त्वमग्ने ... पिताऽसि नः तव जामयो वयम्', whereon Sāy. comments 'जामयो बन्धवः', i. 31. 10; also i. 75. 3, 4;—100. 11;—124. 6, etc.; for different mgs. and etym. see Nir. 3. 4; 3. 6; 4. 20; Vedic Index, Vol. I. p. 284.

4

ऋभुक्षणम् | इन्द्रम् | आ | हुवे | ऊतये ।
ऋभून् | वाजान् | मरुतः | सोमऽपीतये ॥
उभा | मित्रावरुणा | नूनम् | अश्विना ।
ते | नः | हिन्वन्तु | सातये | धिये | जिषे ॥४॥

I invoke the mighty Indra, for protection; and the Ṛbhus, Vājas, and Maruts, to drink the Soma juice; also, both Mitra and Varuṇa, and the Aśvins: and may they direct us to opulence, to holy rites, and to victory.—4.

सा. भा. ।—ऋभुक्षणम् । महन्नामैतत् । महान्तमिन्द्रमा हुवे—आह्वयामि । किमर्थम् ? ऊतये—रक्षणार्थम् । तथा ऋभून् वाजान् । ऋभुर्विभ्वा वाज इति त्रयः सुधन्वनः पुत्राः । तत्र प्रथमोत्तमवाचकशब्दाभ्यां मध्यमोऽपि लक्ष्यते । अतः शब्दद्वयेन त्रयोऽप्युच्यन्ते । तदुक्तं यास्केन—'प्रथमोत्तमाभ्यां बहुवन्निगमा भवन्ति न मध्यमेन' (नि० ११. १६) इति । एवंविधानृभून्मरुतश्च सोमपीतये—सोमपानायाह्वयामि । तथोभा—युगलरूपेण संहत्य वर्त्तमानौ द्वौ मित्रावरुणावश्विनौ च नूनमवश्यं सोमपानायाह्वयामीति शेषः । अपि च आहूताश्चेन्द्रादयो नः—अस्मान् हिन्वन्तु—प्रेरयन्तु । गमयन्त्वित्यर्थः । किमर्थम् ? सातये—सम्भजनीयाय धनाय । धिये—धनसाध्याय कर्मणे । जिषे—जेतुं शत्रूणां जयार्थञ्च । ऋभुक्षणम् । उरु भासमाने स्थाने क्षियति निवसतीत्यृभुक्षाः । उरुपूर्वाद्भातेर्'मृगय्वादयश्चे'ति (उ० १. ३८) कुप्रत्ययः । 'आतो लोप इटि चे'त्याकारलोपः । पूर्वपदस्य ऋभावश्च । ऋभुशब्दोपपदात् 'क्षि निवासगत्यो'रित्यस्मात् 'पतेस्थ चे'ति विधीयमान इनि-प्रत्ययो बहुलवचनाद्भवति । टि-लोपः । 'इतोऽत् सर्वनामस्थाने' (पा० ७. १. ८६) इत्यत्वमिकारस्य । 'वा षपूर्वस्य निगमे' इति विकल्पनादुपधादीर्घाभावः । यद्वा अर्त्तेर्भुक्षिनक् । कित्त्वाद् गुणाभावः । अत एव नावगृह्यते । पीतये । पा पाने । स्था-गा-पा-पचो भाव इति भावे क्तिन् । 'घुमास्थे'तीत्वम् । दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् ।

हिन्वन्तु। हि गतौ वृद्धौ च। अस्मादन्तर्भावितण्यर्थाल्लोटि स्वादित्वात् श्नुः। जिषे। जि जये। 'तुमर्थे सेसेने'ति क्से-प्रत्ययः ॥४॥

ऋभुक्षणम्—great, mighty. Ngh. 3. 3. Altern. form is ऋभुक्षाणम्, Pāṇ. vi. 4.9. सातये—for gain: *cf.* 'त्वामिद्धि हवामहे साता वाजस्य कारवः', vi. 46. 1 (SV. I. 234) 'हवामह इन्द्र' धनस्य सातये', viii. 3. 5 (SV. I. 249); Nir. 4. 95.

### 5

ऋभुः । भराय । सम् । शिशातु । सातिम् ।
समर्यऽजित् । वाजः । अस्मान् । अविष्टु ॥
तत् । नः । मित्रः । वरुणः । ममहन्ताम् ।
अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥५॥

May Ṛbhu supply us with wealth for war; may Vāja, victorious in battle, protect us; and may Mitra, Varuṇa, Aditi, ocean, earth and heaven, be propitious to this (our prayer).—5.

सा. भा.।—ऋभुः प्रथमोऽस्माकं सातिम्—सम्भजनीयं धनं भराय—संग्रामार्थं संशिशातु—सम्यक् तीक्ष्णीकरोतु। संग्रामोचितं धनमस्मभ्यं प्रयच्छत्वित्यर्थः। तथा समर्यजित्। मर्या मनुष्याः। तैः सह वर्तत इति समर्यः संग्रामः, तत्र शत्रूणां जेता वाजः—एतत्संज्ञस्तृतीयश्चास्मान् स्तोतॄनविष्टु—अवतु। संग्रामाद्रक्षत्वित्यर्थः। यदनेन सूक्तेन प्रार्थितमस्मदीयं तन्मित्रादयो ममहन्ताम्—पूजयन्तु। शिशातु। शो तनूकरणे। 'बहुलं छन्दसी'ति विकरणस्य श्लुः। 'आदेच' इत्यात्वम्। द्विर्भावह्रस्वत्वे। 'बहुलं छन्दसी'त्यभ्यासस्येत्वम्। अविष्टु। अवतेर्लोटि 'सिब्बहुलं लेटी'ति बहुलग्रहणात् सिप्। इडागमः। षत्वष्टुत्वे ॥५॥

For 'तन्नो मित्रो वरुणो मामहन्ताम,' etc., forming the last half of this verse—see notes on verse 6, Hymn No. 11.

## VARUṆA

*Characteristic Features*

Varuṇa[1] is one of the greatest gods of the ṚV., celebrated alone in but a dozen hymns. He is frequently associated with Mitra. The epithets *Rājan* (a king) and *Samrāj* (a sovereign ruler) are pre-eminently applied to him. The eye with which he observes mankind is the sun. He is far-sighted (i. 25. 5, 16; viii. 90. 2) and thousand-eyed (vii. 34. 10). He wears a golden and shining robe (i. 25.13). He is borne on a golden car shining like the sun.

He is a great lord of the laws of nature. He upholds heaven and earth, which are set apart by his laws. The sun shines by day by his ordinances, so also the moon and the stars at night. He placed fire in the waters, the sun in the sky, and the Somå on the rock (v. 85. 2). Wind is his breath. He is also the lord of the sea, the god of the waters,[2] their ruler and regulator. He causes the rivers to flow and makes the clouds pour rain on earth.

He is omniscient, he knows the flight of the birds in the sky, the path of ships in the ocean, the course of the wind, beholding all the secret things or actions that have been or shall be done. No creature can even wink without his knowledge (i. 25).

His spies (स्पशः) are often mentioned as sitting round him. They have been explained by the ancient commentators as his encircling rays.

He is called *dhṛtavrata* (one whose laws are fixed). Even the gods themselves follow his ordinances. He is the upholder of moral order. His wrath is roused by sin, the infringement of his ordinances, which he punishes severely. His fetters (पाशाः), with which he binds sinners, are often mentioned and are characteristic of him. He is, however, gracious to the penitent and is kind and friendly to his devoted worshippers. In this connection the famous prayer of Sunaḥśepa is to be noted: 'loosen us from the upper bonds, untie the central and also the lower, that we may live' (i. 25. 21); also, 'Varuṇa, loosen for me the upper, the middle, and

[1] Yāska gives the etym. of the name in Nir. 10. 3; fr. √वृ *to cover*, mg. 'the encompasser', as he encompasses or embodies the universe in all its spheres, physical or moral. Sāy. (on i. 89. 3) connects it with this root in the sense of enveloping or confining the wicked with his bonds.

[2] Varuṇa being the god of waters, punishes the sinners with dropsy: see the legend of Hariścandra, Ait. Br. vii. 15, Ved. Selections (present ed.), p. 8

the lower bond' (i. 24. 15). The celebrated hymn (vii. 86) ascribed to Vasiṣṭha, in which the pious sage prays to Varuṇa, with humble submission and devotion, for the redress of sins, inborn, hereditary, and committed consciously or unconsciously, and for the appeasement of his wrath, the sole source of sufferings,—bears clear evidence to the above important trait of Varuṇa, as the moral governor.

[For more details, see Winternitz, Hist. of Ind. Lit., Vol. I, 80-82; Muir, OST. V. 61-67; Macdonell, Ved. Myth., 22-28.]

---

## Hymn No. 14

### VARUṆA

v. 85

1

प्र । सम्ऽराजे । बृहत् । अर्च । गभीरम् । ब्रह्म । प्रियम् । वरुणाय । श्रुताय ॥
वि । यः । जघान । शमिताऽइव । चर्म । उपऽस्तिरे । पृथिवीम् । सूर्याय ॥१॥

Offer a solemn, profound, and acceptable prayer to the imperial and renowned Varuṇa, who has spread the firmament as a bed for the sun, as the immolator (spreads) the skin of the victim.—1.

सा. भा. ।—'प्र सम्राज' इत्यष्टर्चं त्रयोदशं सूक्तमात्रेयं त्रैष्टुभं वारुणम्। अनुक्रम्यते च—'प्र सम्राजेऽष्टौ वारुणमि'ति। विनियोगो लैङ्गिकः॥

अत्रिः स्वात्मानं सम्बोध्य ब्रवीति—हे अत्रे, त्वं सम्राजे—सम्यग्राजमानायेश्वराय श्रुताय—सर्वत्र श्रूयमाणाय वरुणाय—उपद्रवस्य निवारकाय जनानामावरकायैतन्नामकाय देवाय बृहत्—प्रभूतं गभीरम्—दुरवगाहं बह्वर्थोपेतं प्रियम्—प्रियभूतं ब्रह्म—स्तोत्ररूपं कर्म प्रार्च—प्राचय। प्रोच्चारयेत्यर्थः। यः—वरुणः शमितेव चर्म-शमिता पश्वादिशसनकर्ता यथा उपस्तिरे—उपस्तरणाय चर्म हन्ति तद्वत्। सूर्याय पृथिवीम् विस्तीर्णमन्तरिक्षम्। 'तृतीयस्यां पृथिव्यामि'ति (तै° सं° १.२ १२) श्रुतेरन्तरिक्षस्यापि पृथिवीशब्दवाच्यत्वम्। चकारेति शेषः। विस्तृतं हि व्यवहारयोग्यं भवति तस्माद् व्यवहारायान्तरिक्षं विस्तारितवान्। 'उरुं हि राजा वरुणश्चकार' (ऋ° सं° १.२४.८) इति श्रुतम्॥१॥

शमिता (स —This word is used in the ṚV. to denote the man who cuts up the slaughtered animal; sometimes it has merely the sense of a 'cook', *cf.* 'दैव्यः शमिता' ('अग्निर्वै देवानां शमिता'—Text cited by Sāy. in the Comm.), ii. 3. 10; 'अग्निर्हविः शमिता सूदयाति', iii. 4. 10, where Sāy. explains शमिता as यज्ञः संस्कर्ता ; also i. 162. 9; v. 43. 4.

पृथिवीम्—It is here used in its peculiar etymological sense of 'wide firmament' (fr. √प्रथ्, *to be wide*), which is but rarely met with elsewhere. Sāy. justifies this sense in his Comm. on i. 154. 1. addressed to Viṣṇu, Hymn No. 6. For this sense, *cf.* also v. 84. 1. where, acc. to Sāy., पृथिवी may admit of two-fold mg., and apply also to अन्तरिक्ष, firmament. For पृथिवी as a syn. of अन्तरिक्ष, see Ngh. 1. 3.

2

वनेषु । वि । अन्तरिक्षम् । ततान ।
वाजम् । अर्वत्ऽसु । पयः । उस्रियासु ॥
हृत्ऽसु । क्रतुम् । वरुणः । अप्ऽसु । अग्निम् ।
दिवि । सूर्यम् । अदधात् । सोमम् । अद्रौ ॥२॥

He has extended the firmament over the tops of the trees, has given strength to horses, milk to cows, determination to the heart ; he has placed fire in the waters, the sun in heaven, the Soma-plant in the mountain.—2.

सा. भा. ।—अयं वरुणो वनेषु—वृक्षाग्रेष्वन्तरिक्षं विततान—विस्तारितवान् । तथा च वाजसनेयकम्—'वनेषु हीदमेषु वृक्षाग्रेष्वन्तरिक्षं विततं तस्मादाह वनेषु व्यन्तरिक्षं ततानेति'। वाजम्—बलम्, अर्वत्सु—अश्वेषु विततान । पयः—क्षीरमुस्रियासु—गोषु । उस्रियेति गोनाम । 'उत्स्राविणोऽस्यां भोगाः'* इति तद्व्युत्पत्तिः (नि॰ ४. १९)। हृत्सु—हृदयेषु क्रतुम्—कर्मसङ्कल्पम् । यद्धि मनसा ध्यायति तत् कर्मणा करोति । अप्सु—उदकेष्वग्निं वैद्युतमौर्वं वा । सर्वत्र विततानेति सम्बन्धः । किञ्च दिवि—द्युलोके सूर्यमदधात्—स्थापितवान् सोमं चाद्रौ—पर्वतेऽदधात् ॥२॥

* 'उस्राविणः' is the rdg. of the orig. Nirukta. उत्स्राविणः is adopted by Sāy., see also Comm. on iii. 31. 11.

अप्सु अग्निम्—Either the lightning in the cloud, or the submarine fire.

सोमम‌द्रौ—'The Soma creepers grew on the mountains, that of the Mūjavat mount being specially renowned',—Vedic Index, p. 475. *Cf.* Ṛ V. i. 93. 6; iii. 48. 2, where Soma is called गिरिष्ठा, dwelling in the mountains; v. 36. 2; ix. 46. 1, where Soma has the epithet पर्वतावृध्, growing in the mountains; ix. 82. 3, etc.; AV. iii. 21. 10; *cf.* also 'पर्वतानां पाषाणसन्धिषु सोमवल्ल्या उत्पद्यमानत्वात्',—Mahidhara on Yajus. 4. 31.

3

नीचीनऽबारम् । वरुणः । कवन्धम् । प्र । ससर्ज । रोदसी इति । अन्तरिक्षम् ॥
तेन । विश्वस्य । भुवनस्य । राजा । यवम् । न । वृष्टिः । वि । उनत्ति । भूम ॥३॥

Varuṇa has set free the (water of the) downward-opening cloud for the (benefit of the) heaven the earth, and the firmament; thence is he monarch of all the world, watering the soil as the rain bedews the barley.—3.

सा भा ।—नीचीनबारम्—अधोमुखबिलं प्रससर्ज—कृतवान् । कम् ? कवन्धम् । कवनमुदकम् । तद्धीयतेऽस्मिन्निति कवन्धो मेघः । तं तथाकरोत् । अथवा कवन्धमुदकम् । तदुदकं नीचीनबारम्—नीचीननिर्गमनबिलं चकार । मेघं विदार्योदकमधोमुखं चकारेत्यर्थः । किं प्रतीत्युच्यते । रोदसी—द्यावापृथिव्यौ अन्तरिक्षं च प्रति । लोकत्रयहितायेत्यर्थः । तेनोदकेन विश्वस्य—सर्वस्य भुवनस्य—भूतजातस्य राजा—स्वामी वरुणो भूम—भूमिं व्युनत्ति—क्लेदयति । वृष्टिः—सेक्ता पुमान् यवं न—यवमिव यवान् यथा प्ररोहाय सर्वत्र प्रसारयति तद्वद्भूमिं सर्वत्रोनत्ति । अथवा वृष्टिर्वरुण इति सम्बन्धः । वर्षकः पर्जन्य इत्यर्थः । अस्मिन् पक्षे यवं पुरुष इवेति पुरुषशब्दोऽध्याहार्यः । अत्र 'नीचीनबारं वरुणः कवन्धम्' (नि° १०. ४) इत्यादि निरुक्तं द्रष्टव्यम् ॥३॥

This verse has been interpreted by Yāska in Nir. 10. 4, where the नीचीनबारम् is explained as नीचीनद्वारम्, with a downward door or opening, and कवन्धम् as मेघम्, cloud, or उदकम्, water; for the latter sense, see Ngh. 1. 12[1]; also *cf.* 'मरुतः कवन्धिनः' (उदकवन्तः—Sāy.), v. 54. 8. The compd. नीचीनबार also occurs in viii. 72. 10, referring to the cloud, and in x. 106. 10, referring to the cow, *cf.* 'गवि नीचीनबारे', on which Sāy. comments:—अवाङ्मुख-द्वारे, the cow having opening (in the teats to pour milk) downwards.

[1] 'कवन्धमुदकं पाथः' अमरकोषः ।

4

उनत्ति । भूमिम् । पृथिवीम् । उत । द्याम् ।

यदा । दुग्धम् । वरुणः । वष्टि । आत् । इत् ॥

सम् । अभ्रेण । वसत । पर्वतासः ।

तविषीऽयन्तः । श्रथयन्त । वीराः ॥४॥

Varuṇa waters earth, mid-air and heaven, when he pleases (to send forth) the milk (of the cloud); thereupon the mountains clothe (their summits) with the rain-cloud, and the heroes (Maruts), exulting in their strength, compel (the clouds) to relax.—4.

सा. भा. ।—वरुणो भूमिम्, पृथिवीम्—प्रथितमन्तरिक्षम् । अन्तरिक्षस्यापि पृथिवीशब्द-वाच्यत्वं पूर्वमुक्तम् । उत—अपि च द्याम्—द्युलोकमुनत्ति—क्लेदयति । यदायं दुग्धम् उदकपूरणं वष्टि—कामयते । अथवा दुग्धम्—उदकम् । तेन तत्कार्यमोषध्यादिकं लक्ष्यते । ओषध्यादयः प्रवर्धन्तामिति यदा कामयते । आदित्—अनन्तरमेव संवसत—समाच्छादयन्ति । के ? पर्वतासः—पर्ववन्तोऽद्रयः । केन ? अभ्रेण—मेघेन । किञ्च तविषीयन्तः—बलमिच्छन्तो वीराः—विशेषेण वृष्टेः प्रेरयितारो मरुतः श्रथयन्त—श्रथयन्ति मेघान् ॥४॥

तविषीयन्तः—तविषी is a syn. of बल, strength, Ngh. 2. 9; *cf.* पितुं नस्तोषं महो धर्मांणं तविषीम्', I praise the food the cherisher of mighty *strength*, i. 187. 1 (VS. 34. 7); etym. of the word is given in Nir. 9. 25; fr. √तव्, *to grow*.

5

इमाम् । ऊं इति । सु । आसुरस्य । श्रुतस्य ।

महीम् । मायाम् । वरुणस्य । प्र । वोचम् ॥

मानेनऽइव । तस्थिऽवान् । अन्तरिक्षे ।

वि । यः । ममे । पृथिवीम् । सूर्येण ॥५॥

I proclaim this great device of the renowned Varuṇa, the destroyer of the *Asuras*, who, abiding in the mid-heaven, has meted the firmament by the sun, as if by a measure.—5.

सा. भा. ।—आसुरस्य—असुरसम्बन्धिनः । असुराणामस्य च वध्यघातकभावः सम्बन्धः । असुरहन्तुरित्यर्थः । अथवाऽसुरो मेघः प्राणदानात्, तत्सम्बन्धिनः श्रुतस्य—विश्रुतस्य महीम्—महतीमिमां मायाम्—प्रज्ञां प्रवोचम्—प्रब्रवीमि । कैषा मायेति सोच्यते । यः—वरुणोऽन्तरिक्षे तस्थिवान्—तिष्ठन् मानेनेव—दण्डेनेव सूर्येण पृथिवीम्—अन्तरिक्षं विममे—परिच्छिनत्ति तस्यैषा माया ॥५॥

माया—प्रज्ञा, wisdom; Varuṇa, the sapient, is lauded for his wisdom ('तं वरुणं प्रज्ञया स्तौति')—Yāska; in this connection the passage 'इमाम् नु कवितमस्य मायाम्' of the next verse is quoted in Nir. 6. 13. *cf.* also 'मायाम् तु यज्ञियानामेताम्', x. 88. 6. See note on माया, verse 7, Hymn No. 7.

6

इमाम् । ऊँ इति । नु । कविऽतमस्य । मायाम् ।
मह्रीम् । देवस्य । नकिः । आ । दधर्षं ॥
एकम् । यत् । उद्रा । न । पृणन्ति । एनीः ।
आऽसिञ्चन्तीः । अवनयः । समुद्रम् ॥६॥

No one has counteracted the device of the most sagacious divinity, whereby the lucid water-shedding rivers do not fill the ocean with water.—6.

सा. भा. ।—कवितमस्य—प्रकृष्टप्रज्ञस्य देवस्य—द्योतमानस्य स्तुत्यस्य वा वरुणस्येमाम्—सर्वप्रसिद्धां महीम्—महतीं मायाम्—प्रज्ञां नकिः—नैव आदधर्ष—हिनस्ति कश्चिदपि । उन्विति पूरणौ । यद्—यस्मादेकं समुद्रमुद्ना—उदकेन न पृणन्ति—पूरयन्ति । काः ? एनीः—एन्यः शुभ्रा गमनशीला वा आसिञ्चन्तीः—उदकमासेचयन्त्योऽवनयः—नद्यः सर्वदोदकेन पूरयन्त्योऽपि नैकमपि समुद्रं पूरयन्तीति । इदं वरुणस्य महत् कर्मेति । अत्रान्तरिक्षविस्तारादिसमुद्रापूरणपर्यन्तं कर्म परमेश्वरस्यैवोचितं न वरुणस्येति न वाच्यं तस्य वरुणादिरूपेणावस्थानात् । 'एष ब्रह्मे'त्यादिश्रुतेः ॥६॥

नकिः—हिकम्, नुकम्, नकिः, माकिः, ... नकीम्, are the indec. negative particles used in the Vedas, Ngh. 3. 12; नकिः—never, not at all; none, not even one; for the different mgs., *cf.* 'यस्य शर्मन् नकिर्देवा वारयन्ते न मर्ताः', iv. 17. 19; 'नकिरिन्द्र त्वदुत्तरः,' *no one ever*, Indra, is superior to thee, iv. 30. 1; 'नकिर्देवा मिनीमसि,' x. 134. 7.

7

अर्यम्यम् | वरुण | मित्र्यम् | वा ।

सखायम् | वा | सदम् | इत् | भ्रातरम् | वा ॥

वेशम् | वा | नित्यम् | वरुण | अरणम् | वा ।

यत् | सीम् | आगः | चकृम | शिश्रथः | तत् ॥७॥

Whichever offence Varuṇa, we have ever committed against a benefactor, a friend, a companion, a brother, a near neighbour, or, Varuṇa, against a dumb man, remove that (from us).—7.

सा. भा. ।—हे वरुण, अर्यम्यम् । अर्यमैवार्यम्यः । स्वार्थिको यत् । अतेरिदं रूपम् । प्रदातारमित्यर्थः । अथवेरणान्मननाच्च शास्तीत्यर्यमा गुरुः । तम् । वा—अथवा मित्र्यम् । ञि मिदा स्नेहन इत्यस्मान्मित्रम् । स्वार्थिको यत् । अनुरक्तमित्यर्थः । वा—अथवा सखायम् —समानख्यानं सदमित्—सर्वदैव भ्रातरं वा । नित्यम्—निरन्तरं वेशम्—निकटनिकेतनवर्तिनं वा । अरणं वा । अशब्दमित्यर्थः । अथवाऽरणम्—अदातारं वा नित्यम्—निरन्तरम् । एतान् प्रति यत् सीम्—यदेतत् आगः—अपराधं चकृम तच्छिश्रथः—अस्मत्तो विनाशय ॥७॥

सदम्=सदा, always; *cf.* i. 27. 3;—36. 20, etc.

सीम्—It is a pron. particle, used much like ईम् as an accus. of all numbers and genders in the 3rd pers.—*him, her, it, them,* representing a substantive which often follows.

8

कितवासः | यत् | रिरिपुः | न | दीवि ।

यत् | वा | घ | सत्यम् | उत | यत् | न | विद्म ॥

सर्वा | ता | वि | स्य | शिथिराऽइव | देव ।

अध | ते | स्याम | वरुण | प्रियासः ।८॥

If, like gamesters, who cheat at play, we commit offences knowingly, or (those) of which we know not, do thou, divine Varuṇa, extricate us from them all, as if from loosened (bonds), so that we may be dear, Varuṇa, to thee.—8.

सा. भा. ।—कितवासः—कितवा द्यूतकृतः । किं तवास्ति सर्वं मया जितमिति वदतीति कितवः । न दीवि—न देवने द्यूते यथा यद्रिरिपुः—लेपयन्ति पापमारोपयन्ति यदस्मासु द्वेष्टारो मयि त्वमेतत् पापमकरोदित्याक्षिपन्ति । अत्र पुरस्तादुपचारोऽपि नकार उपमार्थीयः । वा—अथवा । घेति पूरणः । यत्—पापं सत्यमारोपमन्तरेण कृतवन्तः स्मः । उत—अपि च यत्—कृतं पापं न विद्म—न जानीमः, ता—तानि सर्वा—सर्वाणि शिथिरेव—शिथिलानीव शिथिलबन्धनानि फलानीव विष्य—विमोचय । स्यतिरुपसृष्टो विमोचने । हे देव, अध—अनन्तरं ते—तव प्रियासः—प्रियाः स्याम—भवेम ॥८॥

The last two verses form a prayer similar to that of Vasiṣṭha (vii. 86) mentioned in the Introd. notes (p. 2)2) on the characteristic features of Varuṇa, with the object of removing the sin for committing offences consciously or unconsciously against differently related persons. There is in fact no hymn to Varuṇa in which the prayer for forgiveness of guilt does not occur.

---

## PARJANYA

### *Characteristic Features*

Parjanya[1] is celebrated in only three hymns in the ṚV. He represents rain-cloud. The shedding of rain is his most prominent characteristic. In this function he is associated with thunder and lightning. Thundering he strikes down trees, demons, evil-doers. Like a driver whipping and urging on his horses, he rouses up his rain-messengers with wild uproar, deep as the distant roar of the lion. Swiftly Parjanya collects his clouds for rain; the winds rush, the lightnings flush, rain descends, the whole world exults, plants grow for the refreshment of the people, who sing songs of praise in gratitude (v. 83. 4, 9, 10). He is the generator and nourisher of plants and living creatures. Owing to his generative activity he several times receives the epithet of 'father' (v. 83. 6; vii. 101. 3; ix. 82. 6). Earth is represented to be his wife AV. (xii. 1. 12) states that Earth is the mother, Parjanya the father. In his relation to Earth he resembles Dyaus. He is once called the son of Dyaus (vii. 102 1). Parjanya is associated with many other deities. His connection is close with Vāta, and the Maruts, the storm-gods, who are invoked along with him (v. 63. 6;—83. 5).

[1] Yāska suggests varied etymologies in Nir. 10. 10; Zimmer identifies Parjanya with Goth. *Fairguni* and Lith. *Perkūnas* (still the name of the thunder)—ZfDA. 'The name probably stands for Parcanya, from √prc, *fill*, and is the designation for the filled rain-cloud —Grassmann, Zimmer, see Kaegi, 'The Rigveda,' Note 139.

## Hymn No. 15

### PARJANYA

v. 83.

**1**

अच्छ | वद | तवसम् | गीःऽभिः | आभिः ।
स्तुहि | पर्जन्यम् | नमसा | आ | विवास ॥
कनिक्रदत् | वृषभः | जीरऽदानुः ।
रेतः | दधाति | ओषधीषु | गर्भम् ॥१॥

Address the mighty Parjanya who is present; praise him with these hymns; worship him with reverence, him who is the thunderer, the showerer, the bountiful, who impregnates the plants with rain.—1.

सा. भा. ।—'अच्छा वदे'ति दशर्चमेकादशं सूक्तं भौमस्यात्रेरार्षम्। अत्रेयमनुक्रमणिका—'अच्छ दशात्रिः पार्जन्यमु ह्याद्यास्तिस्रो जगत्य उपान्त्यानुष्टुबि'ति। 'यत्पर्जन्ये'त्येषा नवम्यनुष्टुप्, 'वि वृक्षानि'त्याद्यास्तिस्रो जगत्यः, शिष्टाः षट् त्रिष्टुभः। पर्जन्यो देवता। अनेन सूक्तेन प्रावृषं वा दिश उपस्थेयाः। सूत्रितं च—'संश्रितायां सर्वा दिश उपतिष्ठेताच्छा वद तवसं गीर्भिराभिरिति चतसृभिः प्रावृषं सूक्तेन वा' (आ० २ १३) इति॥

हे स्तोतस्त्वम्—बलवन्तं पर्जन्यमच्छ—अभिप्राप्य वद—प्रार्थय। पर्जन्यशब्दो यास्केन बहुधा निरुक्तः—'पर्जन्यस्तृपेराद्यन्तविपरीतस्य तर्पयिता जन्यः परो जेता वा जनयिता वा प्रार्जयिता वा रसानाम्' (नि० १० १०) इति। आभिर्गीर्भिः—स्तुतिवाग्भिः स्तुहि। नमसा—अन्नेन हविर्लक्षणेन आविवास—सर्वतः परिचर। यः पर्जन्यो वृषभः—अपां वर्षिता जीरदानुः—क्षिप्रदानः कनिक्रदत्—गर्जनशब्दं कुर्वन्नोषधीषु गर्भम्—गर्भस्थानीयं रेतः—उदकं दधाति—स्थापयति तं स्तुहि ॥१॥

आ विवास—'विवासतिः परिचर्यायाम्', Nir. 11. 23; it is one of the ten verbs given in the Nighaṇṭu, 3. 5, with the mg. of परिचरण (worship). The verb generally occurs, as here, along with आ; *cf.* 'हविष्मां आ विवासति', i. 12. 9; also 'नम आ विवासे' ('नमस्कारं परिचरामि'—Sāy.), vi. 51. 8. 'विवास is a desiderative of √वन्, *to win*, (see Whitney, para. 1028g)'—Macdonell, Peterson. Roth makes it mean 'seek to win.' In vi. 51. 8 (the passage referred to above) he would translate 'I seek to propitiate.'

कनिक्रदत्—'Participle of a Vedic intensive of क्रन्दति'—Peterson; Roth refers to Pāṇ., vii. 4. 65,—'दाधर्ति दर्धर्ति'' where it is derived as क्रन्द्+लट् तिप् निपातने; *cf.* iv. 50. 5; 'intens. pres. pt. of √*krand*'—Macdonell; Sāy. also takes it as a participle, as he renders it by 'गर्जनशब्दं कुर्वन्', 'अत्यर्थं शब्दयन्।'

जीरदानुः—'of quickening gift' (which is rain),—Macdonell; quick-dropping—Peterson; *cf.* ix. 97. 17, where it refers to वृष्टि (जीरदानुम्=क्षिप्रदानोपेताम्—Sāy.); see also verse 8, Hymn No. 9, and verse 3, Hymn No. 18.

रेतो दधाति, etc.—Parjanya helps the growth of plants with rain (रेतः); रेतः—is a syn. of उदक (water), Ngh. 1. 12.

2

वि | वृक्षान् | हन्ति | उत | हन्ति | रक्षसः ।
विश्वम् | बिभाय | भुवनम् | महाऽवधात् ॥
उत | अनागाः | ईषते | वृष्ण्याऽवतः ।
यत् | पर्जन्यः | स्तनयन् | हन्ति | दुःऽकृतः ॥२॥

He strikes down the trees, he destroys the *Rākṣasas*, he terrifies the whole world by his mighty weapon; even the innocent man flies from the sender of rain, when Parjanya, thundering, slays the wicked.—2.

सा. भा.।—अयं मन्त्रो निरुक्ते स्पष्टं व्याख्यातः। तदेवात्र लिख्यते—'पर्जन्यो विहन्ति वृक्षान् विहन्ति च रक्षांसि सर्वाणि च। अस्माद्भूतानि बिभ्यति महावधात्। महान् ह्यस्य वधः। अप्यनपराधो भीतः पलायते वर्षकर्मवतो यत् पर्जन्यः स्तनयन् हन्ति दुष्कृतः पापकृतः' (नि° १०.११) इति ॥२॥

बिभाय—perf. (लिट्) of √भी in the place of pres. (लट्) by 'छन्दसि लुङ्लङ्लिटः', Pāṇ. iii. 4. 6.

वृष्ण्यावतः—Mark the long second syllable in the Saṁhitā-pāṭha by 'अन्येषामपि दृश्यते', Pāṇ. vi. 3. 137. This word occurs also in vi 22. 1, whereon Sāy. comments—'वृष्ण्यावान्—बलवान्'; some modern scholars render the expression, here, by 'mighty,' while Yāska explains वर्षकर्मवतः (whose function is to pour rain).

ईषते—ईष गतिहिंसादर्शनेषु' *cf.* 'क ईषते तुज्यते को बिभाय', i. 84. 17, where Sāy. has the note 'ईषते—निर्गच्छति। .. ईष ... भौवादिक आत्मनेपदी'।

दुष्कृत:—In verse 9 of this hymn, Sāy. explains the expression to refer to those clouds which withhold rain, *i.e.*, the malignant clouds. Dr. Bühler thinks that the cloud-demons are meant ; see Muir, OST., V, p. 141. Durgācārya explains—'दुष्कृतोऽकालप्रभवांस्तस्करादीन्; अकाले (दुर्भिक्षे) तस्करादयो दुष्कृतः प्रादुर्भवन्ति. तान् सततमभिवर्षन् सुभिक्षं कुर्वन् प्रहन्ति (हन्ति)'; 'evil-doers'—Macdonell; 'blasphemers,'—Kaegi.

3

रथीऽइव । कशया । अश्वान् । अभिऽक्षिपन् ।

आविः । दूतान् । कृणुते । वर्ष्यान् । अह ॥

दूरात् । सिंहस्य । स्तनथाः । उत् । ईरते ।

यत् । पर्जन्यः । कृणुते । वर्ष्यम् । नभः ॥३॥

As a charioteer, urging on his horses with his whip, brings into view the messenger (of war), so Parjanya, (driving the clouds before him), makes manifest the messengers of the rain; the roaring of the lion-(like cloud) proclaims from afar that Parjanya overspreads the sky with rainy clouds.—3.

सा. भा. ।—रथीव—रथस्वामीव । स यथा कशयाश्वानभिक्षिपन् दूतान्—भटानाविष्करोति तद्वदसौ पर्जन्योऽपि कशयाश्वान्—मेघानभिक्षिपन्—अभिप्रेरयन् वर्ष्यान्—वर्षकान् दूतान्—दूतवद्वृष्टिप्रेरकान्मेघान् मरुतो वाविष्कृणुते—प्रकटयति । अहेति पूरणः । एवं सति सिंहस्य । सहतेर्हिंसतेर्वा शब्दकर्मणः सिंहशब्दः । अवर्षणेनाभिभवितुः शब्दयितुर्वा मेघस्य स्तनथाः—गर्जनशब्दा दूरादुदीरते—उद्गच्छन्ति । कदा ? यत्—यदा पर्जन्यो नभः—अन्तरिक्षं वर्ष्यम्—वर्षोपेतं कृणुते—करोति तदा ॥३॥

रथीव—The word रथी: (formed by the *Vārtt.* rule 'छन्दसीवनिपौ च वक्तव्यौ') is more common than रथी (रथिन्); रथीव occurs also in x. 51. 6; रथीरिव would have been metrically better here, the metre of this verse being जगती (of 12 syllables).

सिंहस्य स्तनथा:—'condensed for the thunders of Parjanya like the roars of a lion,'—Macdonell, Ved. Reader, p. 106.

कृणुते—Note that √कृ is more commonly used in cl. 5. in the ṚV. than in cl. 8; see the frequent uses of कृणोति, कृणोत्, etc.; only in three places in Maṇḍala X, the vb. is used in cl. 8; *cf.* कुरु (2. sg. imp. cl. 8), x. 19. 2; -145. 2; and कुर्मः (1. pl. pres. of the same cl.), x. 51. 7.

4

प्र । वाताः । वान्ति । पतयन्ति । विऽद्युतः ।
उत् । ओषधीः । जिहते । पिन्वते । स्वः । इति स्वः ॥
इरा । विश्वस्मै । भुवनाय । जायते ।
यत् । पर्जन्यः । पृथिवीम् । रेतसा । अवति ॥४॥

The winds blow strong, the lightnings flash, the plants spring up, the firmament dissolves, earth becomes (fit) for all creatures, when Parjanya fertilises the soil with showers.—4.

सा. भा. ।—'प्र वाता' इति चतुर्थी पार्जन्यस्य चरोर्याज्या । सूत्रितञ्च—'प्र वाता वान्ति पतयन्ति विद्युत इत्यग्न्याधेयप्रभृती'ति (आ° २ १५) ॥

प्रवान्ति वाता वृष्ट्यर्थम् । पतयन्ति—गच्छन्ति समन्तात् सञ्चरन्ति विद्युतः । ओषधीः—ओषधय उज्जिहते—उद्गच्छन्ति प्रवर्धन्ते स्वः—अन्तरिक्षं पिन्वते—क्षरति । इरा—भूमिर्विश्वस्मै—सर्वस्मै भुवनाय—सर्वजगद्धिताय जायते—समर्था भवति । कदैवमिति । यत्—यदा पर्जन्यो देवः पृथिवीं रेतसा—उदकेन अवति—रक्षति अभिगच्छति वा । तदैवं भवति ॥४॥

जिहते—fr. √हा, *to go*. *cf*. 'वनाचिद्गुया जिहते नि वा भिया', (वनानि निजिहते न्यग्गच्छन्ति, Sāy.), v. 60. 2; also see v. 57. 4.

पिन्वते—*cf*. 'उपरा पिन्वते दिवः', i. 54. 7, where Sāy. has the note 'पिवि मिवि णिवि सेचने, व्यत्ययेनात्मनेपदम्' ; again on 'यः···सोमपातमः समुद्र इव पिन्वते', i. 8. 7, Sāy. comments 'पिन्वते ... सेचनार्थो धातुः' ।

इरा—This word may be taken in the sense of 'food', see Ngh. 2. 7; *cf*. 'इरावतीम्', v. 63. 6, where Sāy. explains it by अन्नवतीम्, अन्न-साधिकाम् ; 'इरावतीः', v. 69. 2; 'इरावत्' (हविर्लक्षणान्नयुक्तम्—Sāy.), vii. 40. 5. इरा independently occurs only here in the ṚV. Macdonell translates this pāda : 'Nurture is born for the whole world.' Peterson—'food for the world is made.' It is to be noted that ळ (डा) is a syn. of earth, Ngh. 1. 1.

5

यस्य । व्रते । पृथिवी । नंनमीति । यस्य । व्रते । शफऽवत् । जर्भुरीति ॥
यस्य । व्रते । ओषधीः । विश्वऽरूपाः । सः । नः । पर्जन्य । महि । शर्म । यच्छ ॥५॥

4

आत्मा | देवानाम् | भुवनस्य | गर्भः ।

यथाऽवशम् | चरति | देवः | एषः ॥

घोषाः | इत् | अस्य | शृण्विरे | न | रूपम् ।

तस्मै | वाताय | हविषा | विधेम ॥४॥

The soul of the gods, the germ of the world, this divinity moves according to his pleasure, his voices are heard, his form is not seen; let us worship that Vāta with oblations.—4.

सा. भा.।—अयं वायुर्देवानाम्—इन्द्रादीनामप्यात्मा—जीवरूपेण तेष्ववस्थानाद् भुवनस्य—भूतजातस्य गर्भः—गर्भवत् प्राणरूपेणान्तर्वर्तमान एषः—ईदृशो देवो यथावशम्—यथाकामं यथेच्छं चरति—वर्तते। अनिवारितगतिः सन् क्वचिच्छीघ्रं गच्छति क्वचिच्छनैर्गच्छति कुतश्चिच्छरीरान्निष्क्रामत्यन्यच्च शरीरं प्रविशतीत्येवं यथेच्छं वर्तत इत्यर्थः। अस्य—वायोरागच्छतो घोषा इत्—शब्दा एव शृण्विरे—श्रूयन्ते। रूपम्—स्वरूपं तु न दृश्यते नीरूपत्वात्। अदृग्विषयत्वेन शब्देनैवानुमीयत इत्यर्थः। तस्मै वाताय—वायवे हविषा—चरुपुरोडाशादिलक्षणेन विधेम—परिचरेम ॥४॥

घोषाः—*cf.* pāda 2, verse 1, this hymn, 'रुजन्नेति स्तनयन्नस्य घोषः'.

न रूपम्—evidently दृश्यते is to be supplied here.

विधेम—may we propitiate; for this sense of the vb., *cf.* 'अया ते अग्ने विधेम', verse 2, Hymn No. 2, and 'यो अस्मै हविषाविधत्', verse 4, Hymn No. 16. *Cf.* 'विधतिः परिचरणकर्मा', Sāy. on विधेम, x. 121.1 (Hymn No. 27). It is to be noted that the obj. of the vb. is always in the dative.

भवन्ति तमेवास्मान्नयत। किन्तु दूरं य एतद्व्यतिरिक्तो विप्रकृष्टमार्गोऽस्ति तस्मादधि—अधिक-मित्यर्थः। अस्मानपनयत ॥३॥

पित्र्यात् मानवात्—'*Manu* is said to be the universal father and the paths he enjoins are those of austerity and ceremonial.'

## 4

ये। देवासः। इह। स्थन। विश्वे। वैश्वानराः। उत ॥

अस्मभ्यम्। शर्म। सऽप्रथः। गवे। अश्वाय। यच्छत ॥४॥

Gods, who are here present, all to whom this full sacrifice is offered, bestow upon us, upon our cattle and horses, happiness far renowned.—4.

सा. भा. ।—ये देवासः—देवा उत—अपि च वैश्वानराः विश्वे सर्वे नरः कर्मनेतारोऽध्वर्य्वादयो यस्य स विश्वानरो यज्ञः। तस्मिन् सोमादिहवींषि स्वीकर्त्तुं भवाः प्रादुर्भूताः। भवार्थेऽण्-प्रत्ययः। यद्वा विश्वानरोऽग्निः। देवानां तन्मुखत्वात्तस्य सम्बन्धिनो विश्वे—सर्वे ये देवा यूयमिह—अस्मिन्नस्मदीये यज्ञे स्थन—हवींष्यादातुं भवथ ततः सप्रथः। प्रथ प्रख्याने। सर्वतः प्रसिद्धं सर्वत्र पृथुतमं वा शर्म। सर्वं शृणोति हिनस्ति दुःखमिति शर्म—सुखं तदस्मभ्यं प्रयच्छत। तथा गवे—अस्मदीयेभ्यो यज्ञसाधनभूतेभ्यो गोभ्योऽश्वाय च शर्म सुखं प्रदत्त ॥४॥

———

## YAMA

*Characteristic Features*

The chief of the dead is Yama. He is a god and is mentioned in enumerations of gods. He is a king who rules the dead (x. 16. 9;-14. 7). He is celebrated in three entire hymns of the ṚV. (x. 14,-135,-154). Besides, references to his name occur several times in the ṚV., particularly in the first and in the tenth Maṇḍala. The hymn x. 10 consists in an interesting dialogue between Yama and his sister Yamī.

Yama is closely connected with Agni, the conductor of the dead. Agni is Yama's friend (x. 21. 5) and his priest (x. 52. 3). Yama is associated with the departed fathers, particularly with the Aṅgirases. With them he comes to the sacrifice and is exhilarated (x. 14. 3-5;-15. 8).

Yama is the assembler of the dead (x. 14. 1), or, in him they finally rest. He gives the dead man a resting place and prepares an abode for him (x. 18. 13).

Yama's abode is the third and highest heaven. Soma is pressed for him; ghee is also offered to him (x. 14. 13, 14). He is entreated to come to the sacrifice and is invoked to lead the worshippers to the gods and to prolong life (x. 14. 14).

Vivasvat is his father (x. 14. 5) and Saraṇyū is his mother (x. 17. 1). He is often called by the patronymic Vaivasvata (x. 14. 1).

The hymn x. 14 (No. 24) which follows, is fully devoted to Yama's praise. In the verses 10-12 of this hymn, two dogs, the messengers of Yama, are mentioned. They are four-eyed, broad-nosed, variegated in colour and are the sons of Saramā. They guard the paths (x. 14. 11) through which the dead enter into the realm of Yama. [For details see Macdonell, Ved. Mythology, 171 ff.].

---

## Hymn No. 24

## YAMA

x. 14

1

परेयिऽवांसम् । प्रऽवतः । महीः । अनु ।

बहुऽभ्यः । पन्थाम् । अनुऽपस्पशानम् ॥

वैवस्वतम् । सम्ऽगमनम् । जनानाम् ।

यमम् । राजानम् । हविषा । दुवस्य ॥१॥

Worship with oblations Yama, the king (of the *Pitṛs*), the son of Vivasvat, the gatherer of the (dead) men, who conducts those who are virtuous over the earth, and opens to many the path (of heaven).—1.

सा. भा.। 'परेयिवांसमि'ति षोडशर्चं चतुर्दशं सूक्तं विवस्वतः पुत्रस्य यमस्यार्षम्। 'अङ्गिरसो नः पितरो नवग्वा' इति षष्ठ्या अङ्गिरः पित्रथर्वभृगुलक्षणा लिङ्गोक्ता देवताः। 'प्रेही'त्याद्यास्तिस्रो लिङ्गोक्तदेवताकाः पितृदेवताका वा। 'अति द्रव सारमेयावि'त्यादिकस्तृचः सरमापुत्रौ यौ श्वानौ परलोकमार्गमभितः स्थितौ तद्देवताकः। शिष्टा यमदेवत्याः। 'यमाय सोममि'ति त्रयोदशाद्या अनुष्टुभः। 'यमाय मधुमत्तममि'त्येषा बृहती। आदितो द्वादश त्रिष्टुभः। तथा चानुक्रान्तम्—'परेयिवांसं षोडश यमो यामं षष्ठी लिङ्गोक्तदेवता पराश्च तिस्रः पित्र्या वा तृचः श्वभ्यां परा अनुष्टुभो बृहत्युपान्त्ये'ति। गतः सूक्तविनियोगः। महापितृयज्ञे यमयाग आद्या याज्या। सूत्रितञ्च—'इमं यम प्रस्तरमा हि सीदेति द्वे परेयिवांसं प्रवतो महीरनु' (आ॰ २.१९) इति।

हे मदीयान्तरात्मन् यजमान वा, त्वं राजानम्—पितॄणां स्वामिनं यमं हविषा—पुरोडाशादिना दुवस्य—परिचर। कीदृशम्? प्रवतः—प्रकृष्टकर्मवतो भूलोकवर्तिभोगसाधनं पुण्यमनुष्ठितवतः पुरुषान्, महीः—तत्तद्भोगोचितभूप्रदेशविशेषान्, अनु परेयिवांसम्—क्रमेण मरणादूर्ध्वं प्रापितवन्तम्। तथा बहुभ्यः स्वर्गार्थिभ्यः पुण्यकृद्भ्यः पुण्यकृतामर्थं पन्थां स्वर्गस्योचितं मार्गमनुपस्पशानम्—अबाधमानम्। पापिन एव पुरुषान् स्वर्गमार्गबाधेन नरकं

प्रापयति न तु पुण्यकृत इत्यर्थः। वैवस्वतम्—सूर्यस्य पुत्रं जनानाम्—पापिनां सङ्गमनम्—गन्तव्यस्थानरूपम् ॥१॥

प्रवतः महीः अनु— '(leading) those who have performed pious deeds (प्रवतः) to particular regions' (महीः)—Sāy. Western scholars do not agree with Sāy. Muir following Roth translates—'to the mighty streams.' *cf.* Max Müller, Lectures, ii. 515. 'From the depths to the heights'—Dr. Haug. 'Along the mighty (महीः) steep paths leading to the highest heaven where Yama dwells';—Macdonell; *cf.* 'तीर्थैस्तरन्ति प्रवतो महीरिति यज्ञकृतः सुकृतो येन यन्ति', AV. xviii. 4. 7; 'यः प्रथमः प्रवतम् (प्रवणवन्तम्—Sāy.) आससाद बहुभ्यः पन्थामनु पस्पशानः, AV. vi. 28. 3.

संगमनं जनानाम्—'in whom the dead finally rest.'—Sāy.; the assembler of people, gathering the dead together in his abode—Macdonell. *cf.* 'यो ममार प्रथमो मर्त्यानां यः प्रेयाय प्रथमो लोकमेतम्। वैवस्वतं संगमनं जनानां यमं···सपर्यत', AV. xviii. 3. 13.

अनुपस्पशानम्—perf. pt. of √स्पश् *to see*, with *aff.* कानच्; Sāy. on AV. xviii. 1. 9, comments:—अनुपस्पशानम्—अवगच्छन्तमित्यर्थः, स्पशतिर्दर्शनकर्मा।

2

यमः । नः । गातुम् । प्रथमः । विवेद ।
न । एषा । गव्यूतिः । अपऽभर्तवै । ऊं इति ॥
यत्र । नः । पूर्वे । पितरः । पराऽईयुः ।
एना । जज्ञानाः । पथ्याः । अनु । स्वाः ॥२॥

Yama, the chief (of all), knows our well-being; this pasture no one can take from us. By the road by which our forefathers have gone, all who are born (proceed) along the paths they have made for themselves.—2.

सा. भा.।—प्रथमः—सर्वेषां मुख्यो यमो नः—अस्माकं प्रजानां गातुम्—शुभाशुभनिमित्तं विवेद—जानाति। एषा गव्यूतिर्नापभर्तवा उ। अतिशयज्ञानयोगाद्यमस्य न केनचिदपहर्तुं-मपनेतुं शक्यत इत्यर्थः। यत्र—यस्मिन् मार्गे नः अस्माकं पूर्वे पितरः परेयुः। एना—अनेन मार्गेण गच्छन्तो जज्ञानाः—जाताः सर्वे स्वाः—स्वभूताः पथ्याः—स्वकर्ममार्गभूता गतीरनु गच्छन्ति ॥२॥

गातुम्—The word may mean—the way, *cf.* 'अक्रुर्दिवो बृहतो गातुमस्मे'—i. 71. 2. (गातुम्—मार्गम्, Sāy.).

अपभर्तवै—A Ved. inf. with *aff.* तवै, Pāṇ. iii. 4. 9. एना—see v. 2. No. 2.

3

मातली | कव्यैः | यमः | अङ्गिरःऽभिः ।
बृहस्पतिः | ऋक्वऽभिः | वबृधानः ॥
यान् | च | देवाः | वबृधुः | ये | च | देवान् ।
स्वाहा | अन्ये | स्वधया | अन्ये | मदन्ति ॥३॥

Mātalin prospers with the Kavyas; Yama with the Aṅgirases; Bṛhaspati with the Ṛkvans; they whom the gods augment, and they who augment the gods, these rejoice in *svāhā*, those in the *svadhā*.—3.

सा भा. ।—आग्निमारुते 'मातली कव्यैरि'त्येषा धाय्या । सूत्रितञ्च—'इमं यम प्रस्तरमा हि सीद मातली कव्यैर्यमो अङ्गिरोभिरुदीरतामवर उत्परासः' (आ॰ ५. २०) इति ।

मातली—मातलिरिन्द्रस्य सारथिः, तद्वानिन्द्रो मातली । स कव्यैः—कव्यभाग्भिः पितृभिः सह ववृधानः—वर्धमानो भवति । यमश्चाङ्गिरोभिः—पितृविशेषैः सह वर्धमानो भवति । बृहस्पतिरृक्वभिरर्चनीयैः पितृभिर्वर्धमानो भवति । तत्र देवा इन्द्रादयो यांश्च कव्यभागादीन् पितॄन् ववृधुः—वर्धयन्ति ये च कव्यभागादयः पितरो देवानिन्द्रादीन् वर्धयन्ति तेषां मध्येऽन्ये—इन्द्रादयः स्वाहा मदन्ति—स्वाहाकारेण हृष्यन्ति । अन्ये—पितरः स्वधया—स्वधाकारेण हृष्यन्ति ॥३॥

मातली—The word occurs only here in the ṚV. The word refers to Indra acc. to Sāy., because his charioteer is known by the name मातलि in the later literature.

ऋक्वभिः—'Praisers', *cf.* i. 87. 6 (ऋक्वभिः—स्तुतिमद्भिः—Sāy.).

The first three Pādas of this verse have been repeated in AV. xviii. 1. 47.

4

इमम् | यम | प्रऽस्तरम् | आ | हि | सीद ।
अङ्गिरःऽभिः | पितृऽभिः | सम्ऽविदानः ॥
आ | त्वा | मन्त्राः | कविऽशस्ताः | वहन्तु ।
एना | राजन् | हविषा | मादयस्व ॥४॥

Yama, who art associated with the Aṅgirasa-Pitṛs, sit down at this sacrifice; may the prayers recited by the priests bring thee hither; be exhilarated, Sovereign (Yama), by this oblation.—4.

सा. भा. ।—महापितृयज्ञे यमस्य 'इमं यमे'त्यादिके द्वे अनुवाक्ये। 'इमं यम प्रस्तरमा हि सीदेति द्वे' (आ॰ २. १९) इति हि सूत्रितम्। सैवाग्निमारुतेऽपि धाय्या। सूक्तं पूर्वमेवोदाहृतम् ॥

हे यम, अङ्गिरोभिः—एतन्नामकैः पितृभिः संविदानः—ऐकमत्यं गतस्त्वमिमं प्रस्तरम्—विस्तीर्णं यज्ञविशेषम् आसीद—आगत्योपविश। हि—यस्मादेवं तस्मात् कविशस्ताः—विद्वद्भिर्ऋत्विग्भिः प्रयुक्ता मन्त्राः, त्वा—त्वाम् आ वहन्तु। हे राजन्, एना—एतेन हविषा तुष्टो मादयस्व—यजमानं हर्षय ॥४॥

अङ्गिरोभिः पितृभिः—पितृभिः is in apposition with अङ्गिरोभिः; as for Yama's close connection with them, see Introd. notes on the characteristic features of Yama, Para. 2. Grassmann and Ludwig have rendered 'Aṅgirases and the fathers'.

5

अङ्गि॑रःऽभिः । आ । ग॒हि॒ । य॒ज्ञिये॑भिः ।
यम॑ । वै॒रू॒पैः । इ॒ह । मा॒द॒य॒स्व॒ ॥
वि॒व॑स्वन्तम् । हु॒वे॒ । यः । पि॒ता । ते॒ ।
अ॒स्मिन् । य॒ज्ञे । ब॒र्हिषि॑ । आ । नि॒ऽसद्य॑ ॥५॥

Come hither, Yama, with the venerable multiform Aṅgirases, and be exhilarated; I summon Vivasvat, who is thy father, to this sacrifice; may he seated on the sacred grass (delight the sacrificer).—5.

सा. भा. ।—हे यम, वैरूपैः—विविधरूपयुक्तैर्वैरूपसामप्रियैर्वा यज्ञियेभिः—यज्ञयोग्यैरङ्गिरोभिः सह आ गहि—आगच्छ। आगत्य चेह—अस्मिन् यज्ञे मादयस्व—यजमानं हर्षय। यो विवस्वान् ते—तव पितास्ति अस्मिन्यज्ञे तं विवस्वन्तं हुवे—आह्वयामि। स चास्तीर्णे बर्हिषि आ निषद्य—उपविश्य यजमानं हर्षयतु ॥५॥

वैरूपैः—'A sub-division of the Aṅgirases'—Roth; 'Children of Virūpa'—Muir. Virūpa is mentioned in i. 45. 3; viii. 64. 6, and the Virūpas in iii. 53. 6 and x. 62. 5.

6

अङ्गिरसः । नः । पितरः । नवऽग्वाः । अथर्वाणः । भृगवः । सोम्यासः ॥
तेषाम् । वयम् । सुऽमतौ । यज्ञियानाम् । अपि । भद्रे । सौमनसे । स्याम ॥६॥

The Angirases, the Navagvas, the Atharvans, the Bhṛgus, who are entitled to the Soma, are our progenitors; may we ever have a place in the favour of these venerable (Pitṛs); may we be ever held in their auspicious regard.—6.

सा. भा. ।—अङ्गिरसः—अङ्गिरोनामका अथर्वाणः—अथर्वनामका भृगवः—भृगुनामकाश्च नः—अस्माकं पितरो नवग्वाः—अभिनवगमनयुक्ता यद्वा नूतनवत् प्रीतिजनका इत्यर्थः। ते च सोम्यासः। सोममर्हन्तीति सोम्याः। यज्ञियानाम्—यज्ञार्हाणां तेषां सुमतौ—अनुग्रहयुक्तायां बुद्धौ वयं स्याम—सर्वदा तिष्ठेम। अपि च सौमनसे भद्रे—सौमनसस्य कारणे कल्याणे फले स्याम—सर्वदा तिष्ठेम ॥६॥

नवग्वाः—The word frequently occurs in the RV. in places together with the word दशग्वाः। The *Navagvas* are decribed by Sāy. as a class of Angirases along with *Daśagvas*, who with the help of Indra released the cows stolen by Vala and kept in confinement. *Cf.* नवग्वासः सुतसोमास इन्द्रम् दशग्वासो अभ्यर्चन्त्यर्कैः v. 29. 12. (Sāy.'s Comm. नवग्वागमनुतिष्ठन्तो ये नवभिर्मासैः समाप्य गतास्ते नवग्वाः दशभिर्मासैर्ये समाप्य गतास्ते दशग्वाः—एते उभयविधा अङ्गिरसः।]

7

प्र । इहि । प्र । इहि । पथिऽभिः । पूर्व्येभिः ।
यत्र । नः । पूर्वे । पितरः । पराऽईयुः ॥
उभा । राजाना । स्वधया । मदन्ता ।
यमम् । पश्यासि । वरुणम् । च । देवम् ॥७॥

Depart, depart by the former paths by which our forefathers have departed; there shalt thou behold the two monarchs Yama and the divine Varuṇa rejoicing in the *svadhā*.—7.

सा.भा.।—सत्रमध्ये दीक्षितस्य मरणे 'प्रेहीत्या'द्याः पञ्चर्चस्तृतीयावर्जिता होत्रा शंसनीयाः। सूत्रितञ्च—'प्रेहि प्रेहि पथिभिः पूर्व्येभिरिति पञ्चानां तृतीयामुद्धरेत्' (आ° ६.१०) इति॥

यत्र—यस्मिन् स्थाने नः—अस्माकं पूर्वे—पुरातनाः पितरः—पितामहादयः परेयुः पूर्व्येभिः पूर्वस्मिन् काले भवैः। अनादिकालप्रवृत्तैरित्यर्थः। पथिभिः—मार्गैर्हे मत्पितस्तत् स्थानं प्रेहि—प्रगच्छ शीघ्रं गच्छ। गत्वा च स्वधया—अमृतेनान्नेन मदन्तौ—तृप्यन्तौ राजाना—राजानावुभा—उभौ यमं देवम्—द्योतमानं वरुणञ्च पश्यासि—पश्य॥७॥

Note that pāda 2 of this verse is identical with pāda 3, v. 2.

• पश्यासि—mayest thou see; *leṭ* (Ved. subj.) 2. sg. Sāy. takes it in imp. sense.

8

सम् । गच्छस्व । पितृऽभिः । सम् । यमेन ।
इष्टापूर्तेन । परमे । विऽओमन् ॥
हित्वाय । अवद्यम् । पुनः । अस्तम् । आ । इहि ।
सम् । गच्छस्व । तन्वा । सुऽवर्चाः ॥८॥

Be united with the *Pitṛs*, with Yama, and with the fulfilment of thy wishes in the highest heaven; discarding iniquity, return to thine abode, and unite thyself to a luminous body.—8.

सा.भा.—हे मदीय पितः, ततस्त्वं परमे—उत्कृष्टे व्योमन्—व्योमनि स्वर्गाख्ये स्थाने स्वभूतैः पितृभिः यमेन सह सं गच्छस्व। इष्टापूर्तेन—श्रौतस्मार्तदानफलेन सङ्गच्छस्व। तत इष्टापूर्तेन संगम्य अवद्यम्—पापं हित्वा—परित्यज्यास्तम्—गृहं पुनरेहि—आगच्छ। ततः सुवर्चाः। तृतीयार्थे प्रथमा। सुवर्चसा शोभनदीप्तियुक्तेन तन्वा—स्वशरीरेण सङ्गच्छस्व॥८॥

इष्टापूर्तेन—The word occurs only here in the Ṛgveda. It occurs in the AV., V. S., T. S., Ait. Br., in Kaṭh. Up. The lexicographers explain the expression as meaning—'oblations' (इष्ट) and 'good works' (पूर्त); 'recompense of the sacrifices offered'—Muir. Dr. Haug says इष्ट means 'what is sacrificed' and आपूर्त, 'filled up to'. Roth explains it as meaning 'wish and fulfilling, *i.e.*, the fulfilment of desire'.

हित्वाय—'Instead of "tvā" alone, the Veda has three forms of the suffix, namely, tvā, tvāya and tvī.' Whitney, Para. 993b.

*N.B.* Verses 7 and 8 are addressed to the spirit of the dying person.

9

अप | इत | वि | इत | वि | च | सर्पत | अतः ।
अस्मै | एतम् | पितरः | लोकम् | अक्रन् ॥
अहःऽभिः | अत्ऽभिः | अक्तुऽभिः | विऽअक्तम् ।
यमः | ददाति | अवऽसानम् | अस्मै ॥८॥

Depart from hence, begone, go far off, (evil spirits); the *Pitṛs* have assigned this place to him, Yama has given him a place of cremation consecrated by days, streams, and nights.—9,

सा. भा. ।—पैतृमेधिके कर्मणि श्मशानायतनं प्रोक्षति 'अपेत वीत' इति। सूत्रितञ्च—'गर्तोदकेन शमीशाखया त्रिः प्रसव्यमायतनं परिव्रजन् प्रोक्षत्यपेत वीत वि च सर्पतातः' (आ° गृ° ४.२) इति।

श्मशाने पूर्वं स्थिता हे पिशाचादयः, अतः—अस्मात् मृतयजमानदहनस्थानात् अपेत—अपगच्छत। वीत—विशेषेण गच्छत। वि सर्पत च। इदं स्थानं परित्यज्य नानाभावेन दूरतरं देशं गच्छतेत्यर्थः। पितरः, अस्मै मृतयजमानस्यार्थाय एतं लोकम्—इदं दहनस्थानम् अक्रन्—यमस्याज्ञया अकुर्वन्। यमोऽप्यहोभिः—दिवसैरद्भिः—अभ्युक्षणोदकैरक्तुभिः—रात्रिभिर्व्यक्तम्—सङ्गतम्। शुद्धिनिमित्तैः कालोदकादिभिः शोधितमित्यर्थः। अवसानम्—दहनस्थानमस्मै—मृतयजमानस्यार्थाय ददाति—दत्तवान् ॥९॥

अक्तुभिः—The word is a syn. of रात्रि, Ngh. 1. 7.

10

अति | द्रव | सारमेयौ | श्वानौ ।
चतुःऽअक्षौ | शबलौ | साधुना | पथा ॥
अथ | पितॄन् | सुऽविदत्रान् | उप | इहि ।
यमेन | ये | सधऽमादम् | मदन्ति ॥१०॥

Pass by a secure path beyond the two spotted, four-eyed dogs, the progeny of Saramā, and join the wise *Pitṛs*, who rejoice joyfully with Yama.—10.

सा. भा.।—अनुस्तरण्या वृक्कौ पार्श्वयोराम्रफलाकृती तावुद्धत्य प्रेतस्य हस्तयोर्निदधाति 'अति द्रव सारमेयावि'ति द्वाभ्याम्। सूत्रितञ्च—'वृक्कावुद्धृत्य पाण्योरादध्यात् अति द्रव सारमेयौ श्वानौ' (आ॰ गृ॰ ४. ३) इति।

हे अग्ने, साधुना पथा—समीचीनेन मार्गेण श्वानावुभौ अति द्रव—अतिक्रम्य गच्छ। यमसम्बन्धिनौ यौ श्वानौ प्रेतस्य बाधकौ तौ परित्यज्य समीचीनेन मार्गेण प्रेतं नयेत्यर्थः। कीदृशौ श्वानौ? सारमेयौ। सरमा नाम काचित् प्रसिद्धा देवशुनी तस्याः पुत्रौ। चतुरक्षौ—उपरिभागे पुनरप्यक्षिद्वयं ययोस्तादृशौ। अथ शोभनमार्गेण गमनानन्तरं ये पितरो यमेन सधमादम्—सहर्षं मदन्ति प्राप्नुवन्ति तान् सुविदत्रान्—सुष्ठु भिज्ञान् पितॄन् उपेहि उपगच्छ ॥१०॥

सारमेयौ श्वानौ—The two dogs of Yama are mentioned here in three successive verses. In AV. viii. 1. 9, the two dogs of Yama are referred to, where one of them is said to be black (श्याम) and the other spotted (शबल). चतुरक्षौ—Possibly implies *keen sight*.—Macdonell. This epithet is also applied to Agni, i. 31. 13.

In the Avesta it is asserted that a four-eyed dog watches at the head of the bridge by which the souls of the dead pass to the other world, and scares away the fiend from the holy ones.

11

यौ । ते । श्वानौ । यम । रक्षितारौ ।
चतुःऽअक्षौ । पथिरक्षी इति पथिऽरक्षी । नृऽचक्षसौ ॥
ताभ्याम् । एनम् । परि । देहि । राजन् ।
स्वस्ति । च । अस्मै । अनमीवम् । च । धेहि ॥११॥

Entrust him, O king, to thy two dogs which are thy protectors, Yama, the four-eyed guardians of the road, renowned by men; grant him prosperity and health.—11.

सा. भा.।—हे राजन्, हे यम, ते—त्वदीयौ यौ श्वानौ विद्येते ताभ्यां हे राजन् यम, एनम्—प्रेतं परि देहि—रक्षार्थं प्रयच्छ। कीदृशौ श्वानौ? रक्षितारौ—यमगृहस्य रक्षकौ। चतुरक्षौ—अक्षिचतुष्टययुक्तौ। पथिरक्षी—मार्गस्य रक्षकौ। नृचक्षसौ—मनुष्यैः ख्याप्यमानौ। श्रुतिस्मृतिपुराणाभिज्ञाः पुरुषास्तौ प्रख्यापयन्ति। ताभ्यां श्वभ्यां दत्त्वा अस्मै प्रेताय स्वस्ति च—क्षेममपि अनमीवञ्च—रोगाभावमपि धेहि—सम्पादय ॥११॥

12

उरुऽनसौ । असुऽतृपौ । उदुम्बलौ ।
यमस्य । दूतौ । चरतः । जनान् । अनु ॥
तौ । अस्मभ्यम् । दृशये । सूर्याय ।
पुनः । दाताम् । असुम् । अद्य । इह । भद्रम् ॥१२॥

The messengers of Yama, broad-nosed, and of exceeding strength, and satiating themselves with the life (of mortals), hunt mankind; may they allow us this day a prosperous existence here, that we may look upon the sun.—12.

सा. भा. ।—यमस्य सम्बन्धिनौ दूतौ—श्वानौ जनान् अनु—प्राणिनो लक्षीकृत्य सर्वत्र चरतः । कीदृशौ ? उरुणसौ—दीर्घनासिकायुक्तौ । असुतृपौ—परकीयान् प्राणान् स्वीकृत्य तैस्तृप्यन्तौ उदुम्बलौ—उरुबलौ विस्तीर्णबलौ तौ—उभौ दूतौ सूर्याय दृशये—सूर्यस्य दर्शनार्थम् अद्य—अस्मिन् दिन इह—कर्मणि भद्रमसुम्—समीचीनं प्राणं पुनरस्मभ्यं दाताम्—अदत्ताम् ॥१२॥

असुतृपौ—Some take it as अ-सुतृपौ; insatiable—Muir. Lanman (Reader, 165) connects it with Avestan √trif *to steal*; acc. to him—तृपु (a thief) is a derivative of a corresp. Skt. rt.; पशुतृपम् (a stealer of cattle) occurs in vii. 86. 5.

13

यमाय । सोमम् । सुनुत । यमाय । जुहुत । हविः ॥
यमम् । ह । यज्ञः । गच्छति । अग्निऽदूतः । अरम्ऽकृतः ॥१३॥

Pour out the Soma for Yama; to Yama offer the oblation, the decorated sacrifice, of which Agni is the messenger, proceeds to Yama.—13.

सा. भा. ।—हे ऋत्विजः, यमाय—यमदेवतार्थं सोमं सुनुत—लतात्मकं सोममभिषुणुत । तथा यमार्थं हविर्जुहुत । अग्निर्दूतो यस्मिन्यज्ञे सोऽयमग्निदूतः । अग्नेर्दूतत्वमन्यत्राम्नातम् । 'अग्निर्देवानां दूत आसीदि'ति । अरङ्कृतः—बहुभिर्द्रव्यैरलङ्कारदूपैर्युक्तः । तादृशो यज्ञो यमं ह—यममेव गच्छति ॥१३॥

14

यमाय । घृतऽवत् । हविः । जुहोत । प्र । च । तिष्ठत ॥
सः । नः । देवेषु । आ । यमत् । दीर्घम् । आयुः । प्र । जीवसे ॥१४॥

Offer the oblation of clarified butter to Yama, and stand nigh (to the altar); it is he who among the gods gives us a long life to live.—14.

सा भा. ।—हे ऋत्विजः, यूयं यमाय घृतवत्—आज्येन संयुक्तं हविः—पुरोडाशादिकं जुहोत—जुहुत । प्र च तिष्ठत । यमं यूयमुपतिष्ठध्वञ्च । देवेषु मध्ये स यमो देवः प्र जीवसे—प्रकृष्टजीवनार्थं नः—अस्माकं दीर्घमायुरायमत्—प्रयच्छतु ॥१४॥

जुहोत—for जुहुत; imp. 2. pl. term. त is substituted by तप्, Pāṇ. vii. 1.45; accordingly गुण takes place. As regards जुहुता (v. 13)—त is not so substituted; being अपित् it is ङित्, so no गुण, and the final vowel is prolonged, Pāṇ. vi. 3. 133; another form is जुहोतन (v. 15) with the substitution of त by तनप्.

15

यमाय । मधुमत्ऽतमम् । राज्ञे । हव्यम् । जुहोतन ॥
इदम् । नमः । ऋषिऽभ्यः । पूर्वऽजेभ्यः । पूर्वेभ्यः । पथिकृत्ऽभ्यः ॥१५॥

Offer to the royal Yama this most sweet oblation; (let) this our adoration (be addressed) to the ancient sages, the first followers of (virtuous) paths.—15.

सा. भा. ।—हे ऋत्विजः, यमाय राज्ञे मधुमत्तमम्—अतिशयेन मधुरं हव्यम्—पुरोडाशादिकं हविर्जुहोतन—जुहुत । पूर्वजेभ्यः—सृष्ट्यादावुत्पन्नेभ्योऽतएव पूर्वेभ्यः—अस्मत्तः पूर्वभाविभ्यः पथिकृद्भ्यः—शोभनमार्गकारिभ्य ऋषिभ्य इदं प्रत्यक्षं यथा भवति तथा नमोऽस्तु ॥१५॥

16

त्रिऽकद्रुकेभिः । पतति । षट् । उर्वीः । एकम् । इत् । बृहत् ॥
त्रिऽस्तुप् । गायत्री । छन्दांसि । सर्वा । ता । यमे । आऽहिता ॥१६॥

(Yama) acquires the three *Trikadruka* sacrifices; the six earths, the one great (moving world); the *Triṣṭup*, *Gāyatrī*, all the sacred metres converge in Yama.—16.

सा. भा.।—त्रिकद्रुकेभिः। द्वितीयार्थे तृतीयैषा। त्रिकद्रुकान् ज्योतिर्गौरायुरिति त्रयो यागविशेषास्त्रिकद्रुका उच्यन्ते। तान् प्रत्यङ्गभावाय संरक्षणार्थञ्च पतति—यमस्तान् प्राप्नोति। षट्संख्याका उर्वीः—भूमीः कृताकृतप्रत्यवेक्षणाय प्राप्नोति। ताश्चोर्व्यः शाखान्तरमन्त्रे समाम्नाताः—'षण्मोर्वीरंहसस्पान्तु द्यौश्च पृथिवी चाहश्च रात्रिश्चापश्चौषधयश्च वागि'ति। एकमित्—एकमेव बृहत्—महज्जगद्यमश्च प्रतिपालनीयः प्राप्नोति। किञ्च यानि त्रिष्टुब्गायत्र्यादीनि छन्दांसि सन्ति सर्वा—सर्वाणि ता—तानि छन्दांसि यमे आहिता—आहितानि। ऋग्भिः स्तुतित्वेनावस्थितानि ॥१६॥

त्रिकद्रुकेभिः—The *Trikadrukas* are said to denote the first three days, or the celebrations on those three days of the ceremonial named *Abhiplava*, called severally, *Jyotiḥ*, *Gauḥ*, *Āyuḥ*; *cf.* त्रिकद्रुकेषु, i. 32. 3; ii. 11. 17.

षट् उर्वीः—The six earths (or substances) are heaven, earth, water, plants, the sun and truth.

---

## PITṚS

### *Characteristic Features*

The Pitṛs or Fathers are the blessed dead, who dwell in the third heaven. They are the early or first ancestors (x. 15. 8, 10), who made the paths by which the recent dead go to join them (x. 14. 2, 7, 15). They are celebrated in two hymns of the ṚV. (x. 15, 54).

Different groups of the Pitṛs are mentioned, *e.g.*, the Navagvas, Vairūpas, Aṅgirases, Atharvans, Bhṛgus, Vasiṣṭhas (x. 14. 4-6; -15.8). Among these the Aṅgirases are particularly associated with Yama (x. 14. 3, 5). The Pitṛs are classified as lower, higher and middle, as earlier and later.

They rejoice with Yama at the same feast (x. 14. 10), and feast with the gods (vii. 76. 4). They are immortal and are even spoken of as gods (x. 56. 4). Like gods they receive worship and divine honours. Cosmical actions like those of the gods are sometimes attributed to them. They are said to have adorned the sky with stars (x. 68.11), to have placed darkness in the night and light in the day; they generated the dawn.

The path of the Pitṛs (पितृयान) is distinguished from that of the gods (देवयान). Similarly the region of the gods (स्वर्गलोक) is different from that of the Pitṛs (पितृलोक), the door of the former being said to be in the north-east, and that of the latter in the south-east.

The Pitṛs receive oblations as their food, which are offered with the term *svadhā* as contrasted with *svāhā* with which the oblations are presented to the gods (x. 14. 3) ; *havya* is the name of the oblations to the gods, while *kavya* of the oblations to the Pitṛs. A particular group of the Pitṛs is termed *kavyas* (x. 14. 3, Hymn No. 24), because they are entitled to *kavya*, the offerings peculiar to them.

The Pitṛs are fond of Soma. Coming to their sacrifice, they sit on the sacrificial grass to the south and drink the pressed draught.

The Pitṛs are entreated to protect their devoted worshippers, and invoked not to injure their descendants for any sin committed against them. They are besought to give riches, offspring and long life to their devoted sons.

[For further details see Muir, OST. v. 286 ff; Macdonell, Ved. Myth., 170-171].

---

## Hymn No. 25.

### PITṚS

x. 15.

(Verses 1-8)

1

उत् | ईरताम् | अवरे | उत् | परासः | उत् | मध्यमाः | पितरः | सोम्यासः ॥

असुम् | ये | ईयुः | अवृकाः | ऋतऽज्ञाः | ते | नः | अवन्तु | पितरः | हवेषु ॥१॥

Let the lower, the upper, the intermediate *Pitṛs* rise up, accepting the *Soma* libation ; may those progenitors who, harmless as they are, acknowledging our offerings, have come to preserve our lives, protect us upon our invocations.—1.

सा. भा. ।—'उदीरतामि'ति चतुर्दशर्चं पञ्चदशं सूक्तम् । अत्रानुक्रम्यते—'उदीरतां षळूना शङ्खः पित्र्यं जगत्येकादशी' इति । 'यामायनाः परे पञ्चे'ति वचनाद्यमपुत्रः शङ्खाख्य ऋषिः । 'अग्निष्वात्ता' इत्येषा जगती शिष्टास्त्रिष्टुभः । पितरो देवता । गतः सूक्तविनियोगः ।

अष्टकाया'मुदीरतामवर' इत्याद्या अष्टावृचो होमार्थाः। सूत्रितञ्च—'उदीरतामवर उत् परास इत्यष्टाभिर्हुत्वा' (आ° गृ° २. ४) इति। महापितृयज्ञे पितरः सोमवन्त इत्यस्यानुवाक्या 'उदीरतामि'त्येषा। सूत्रितञ्च—'पितरोऽग्निष्वात्ता यम उदीरतामवर उत् परासः' (आ° २. १९) इति। आग्निमारुतेऽप्येषा धाय्या। सूत्रितञ्च—'मातली कव्यैर्यमो अङ्गिरोभिरुदीरतामवर उत् परासः' (आ° ५. २०) इति॥

त्रिविधाः पितर उत्तमा मध्यमा अधमाश्चेति। यथाविधि श्रौतं कर्मानुष्ठाय पितृत्वं प्राप्ता उत्तमाः। स्मार्तकर्ममात्रपरा मध्यमाः। अत्रापि कैश्चित् संस्कारैर्विकला अधमाः। एतदेवाभिप्रेत्य 'ये अग्निदग्धा ये अनग्निदग्धा' इत्यादिमन्त्रा आम्नाताः। तेष्ववरे—निकृष्टा उदीरताम्—उत्तमं हविः प्राप्नुवन्तु। परासः—उत्तमाः पितर उदीरतां मध्यमाः पितरश्च उदीरताम्। ते सर्वेऽप्यस्मद्विषये सोम्यासः—सोम्या अनुग्रहपराः सन्तु। ये पितरोऽवृकाः—वृकवत्—आरण्यश्ववदस्मासु हिंसामकुर्वन्त ऋतज्ञाः—अस्मदनुष्ठितं यज्ञं जानन्तोऽसुम्—अस्मत्-प्राणमीयुः—रक्षितुं प्राप्तास्ते पितरो हवेषु—अस्मदीयेष्वाह्वानेषु नः—अस्मान् अवन्तु—रक्षन्तु॥१॥

This verse has been explained by Yāska in Nir. xi. 18, where 'अवृकाः' is explained as अनमित्राः, not hostile, *i.e.*, benevolent.

उदीरताम्—Mahīdhara (in YV. xix. 49) differs from Sāy. as he explains it to mean 'let them go to the upper region'; The Western scholars follow Mahīdhara; 'let them arise'—Muir and Macdonell.

सोम्यासः—Those who deserve or are entitled to the Soma libation; cf. सोम + *aff.* य, Pāṇ., iv. 4. 137. *Cf.* 'अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः', x. 14. 6 (Hymn No. 24). Acc. to Yāska, it means 'सोमसम्पादकाः' the Soma-pressers, (*i.e.*, those who prepare the Soma-juice), or Soma-offerers *cf.* 'अंसत्रं सोम्यानाम्', may there be strength sufficient to protect the shoulders for the *Soma-pressers*, viii.17.14; SV. I. 275.

असुं य ईयुः—Western scholars differ from Sāy. Muir translates—'who have attained to (higher) life (*asu*)'. Have gone to (eternal) life (as opposed to terrestrial life).—Macd. Mahīdhara explains—'identical with air, having assumed the form of the air.'

2

इदम् । पितृऽभ्यः । नमः । अस्तु । अद्य ।
ये । पूर्वासः । ये । उपरासः । ईयुः ॥
ये । पार्थिवे । रजसि । आ । निऽसत्ताः ।
ये । वा । नूनम् । सुऽवृजनासु । विक्षु ॥२॥

Let this our adoration be to-day addressed to those *Pitṛs* our predecessors, to those our successors who have departed (to the world of the manes); to those who are seated in the terrestrial sphere; and to those who are present among opulent people.—2.

सा. भा.।—महापितृयज्ञे पितरो बर्हिषद इत्यस्य 'इदं पितृभ्य' इति द्वितीयानुवाक्या। सूक्तन्तु पूर्वमेवोदाहृतम् (आ° २. १९)। आग्निमारुते 'इदं पितृभ्य' इत्येषा धाय्या। सूत्रितञ्च—'आहं पितॄन् सुविदत्रां अवित्सीदं पितृभ्यो नमो अस्त्वद्य स्वादुष्किलायमिति चतस्रः' (आ° ५.२०) इति॥

पूर्वासः—यजमानोत्पत्तेः पूर्वमुत्पन्ना ज्येष्ठभ्रातृपितृपितामहादयो य ईयुः—पितृलोकं प्राप्ताः। येऽप्यन्ये पार्थिवे—पृथिवीसम्बन्धिनि रजसि—रजोगुणकार्येऽस्मिन् कर्मणि आ निषत्ताः—हविः स्वीकर्तुमागत्योपविष्टाः। ये वा केचिदन्ये बन्धुवर्गरूपाः पितरो विक्षु—बन्धुरूपासु प्रजासु आ निषत्ताः—श्राद्धादिस्वीकारायागत्योपविष्टाः। कीदृशीषु विक्षु? सुवृजनासु। वृज्यते परित्यज्यते दारिद्र्यमनेनेति वृजनं धनम्। शोभनं वृजनं यासां ताः सुवृजनाः। तादृशीषु धनसमृद्धया श्राद्धादिकर्मपरास्वित्यर्थः। सर्वेभ्य उक्तेभ्यः पितृभ्योऽद्य—अस्मिन् कर्मणीदं नमोऽस्तु—अयमाहुतिप्रदानपूर्वको नमस्कारो भवतु॥२॥

पार्थिवे रजसि—'At this rite which is connected with the earth and is the effect of the quality of *rajas*'. 'In the atmospheric region above the earth.' —Macd. *Cf.* AV. xviii. 2. 49, 'ये नः पितुः पितरो ये पितामहा य आविविशुरुर्वन्तरिक्षम्। य आक्षियन्ति पृथिवीमुत द्यां तेभ्यः पितृभ्यो नमसा विधेम।'

निषत्ताः—नि—√सद्+क्त, 'नसत्तनिषत्त°', Pāṇ. viii. 2. 61.

3

आ। अहम्। पितॄन्। सुऽविदत्रान्। अवित्सि।
नपातम्। च। विऽक्रमणम्। च। विष्णोः॥
बर्हिऽसदः। ये। स्वधया। सुतस्य।
भजन्त। पित्वः। ते। इह। आऽगमिष्ठाः॥३॥

I have brought to my presence the *Pitṛs* who are well cognisant (of my worship), the infallibility, and progressive advance of the sacrifice; the *Pitṛs* known as *Barhiṣads* (who sit on the sacred grass), frequently coming hither, worship the food of the effused (*Soma*) with the sacrificial cake.—3.

सा. भा.।—अहं यजमानः सुविदत्रान्—मदीयां भक्तिं सुष्ठु जानतः पितॄन् आविस्सि—आभिमुख्येन लब्धवानस्मि। विष्णोः—व्यापिनो यज्ञस्य नपातञ्च—विनाशाभावञ्च विक्रमणञ्च—विशेषेण प्रवृत्तिञ्च लब्धवानस्मि। ये पितरो बर्हिषदः—बर्हिषि सीदन्ति त इह—अस्मिन् कर्मणि आगमिष्ठाः—अतिशयेनागताः। आदरपूर्वं समागत्य स्वधया—पुरोडाशाद्यन्नेन सह सुतस्य—अभिषुतस्य सोमलक्षणस्य पित्वः—पितोरन्नस्य भागं भजन्त—सेवन्ते उपयुञ्जते ॥३॥

नपातं च विक्रमणं (च विष्णोः)—There is a wide divergence of views among the Western scholars about the significances of these two words) *viz.*, नपातम् and विक्रमणम्. Sāy. gives altogether a different interpretation in the AV. xviii. 1. 45, where this entire hymn occurs. Macdonell simply translates नपातम् as 'the grandson', and विक्रमणम् as 'the wide stride of Viṣṇu.' Geldner ingeniously suggests that नपातम् here stands for Yama, because in the V.S. (xxix. 60) Viṣṇu is called the husband of Aditi, whose son was Vivasvat, the father of Yama. Macdonell following Ludwig gives an alternative meaning of नपातम् as 'fire'.

Sāy, too, in the AV. explains नपातम् as 'the guardian or the conductor of sacrifice, *viz.*, Agni'. *Cf.* न पातम् न पातयितारम् निर्वाहकम् अग्निम्.

पित्वः—Gen. of पितु meaning अन्न, Ngh. 2. 7.

4

बर्हिऽसदः | पितरः | ऊती | अर्वाक् | इमाः | वः | हव्या | चकृम | जुषध्वम् ॥
ते | आ | गत | अवसा | शम्ऽतमेन | अथ | नः | शम् | योः | अरपः | दधात ॥४॥

*Pitṛs, Barhiṣads,* protect (us who are) in your presence; who have made these oblations for you, accept them; come with your most felicitous protection, and bestow upon us health and happiness, and pardon (us) our sin.—4.

सा. भा.।—हे बर्हिषदः। बर्हिषि—यज्ञे सीदन्तीति बर्हिषदः। अत्रापि 'ये वै यज्वानस्ते पितरो बर्हिषद' इत्यत्र श्रुतत्वाद्यागं कृत्वा प्रेत्य पितृलोकं प्राप्ता बर्हिषदः। तादृशा हे पितरः, अर्वाक्—अर्वाचीनानामस्माकम् ऊती—रक्षा। भवद्भिः कर्तव्येति शेषः। वः—युष्मदर्थमिमा हव्या—एतानि हवींषि चकृम। अतस्तानि जुषध्वम्। ते हविर्जुष्टवन्तो यूयं शन्तमेन—सुखतमेन अवसा—रक्षणेन निमित्तभूतेन आगत—आभिमुख्येनास्मान् प्राप्नुत। अथ—अनन्तरं नः—अस्मभ्यं शम्—सुखं योः—दुःखवियोगम् अरपः—पापरहितञ्च दधात—दत्त ॥४॥

5

उपऽहूताः । पितरः । सोम्यासः ।
बर्हिष्येषु । निऽधिषु । प्रियेषु ॥
ते । आ । गमन्तु । ते । इह । श्रुवन्तु ।
अधि । ब्रुवन्तु । ते । अवन्तु । अस्मान् ॥५॥

May the *Pitṛs,* who are entitled to the *Soma,* come, when invoked by us, to the agreeable treasures connected with the sacred grass; let them here listen (to our praises), let them speak (their approbation in reply); let them protect us.

सा. भा. ।—महापितृयज्ञे पितरः सोमवन्त इत्यस्य याज्या 'उपहूताः पितर' इत्येषा । सूत्रितञ्च—'उपहूताः पितरः सोम्यासस्त्वं सोम प्रचिकितो मनीषा' (आ २. १९) इति ॥

सोम्यासः—सोम्या अस्मदनुग्रहपराः सोमसम्पादिनो वा पितरो बर्हिष्येषु—यागार्हेषु प्रियेषु—तृप्तिकरेषु निधिषु—निधिसदृशेषु हविःषु निमित्तभूतेषु सत्सु उपहूताः—अस्माभिराहूतास्ते पितर आ गमन्तु—आगच्छन्तु । आगत्य चेहास्मिन् कर्मण्यस्माभिः प्रयुक्ताः स्तुतीः श्रुवन्तु—शृण्वन्तु । श्रुत्वा चाधि ब्रुवन्तु—साधुरयं यजमान इत्यादरेण कथयन्तु । ते तादृशाः पितरोऽस्मानवन्तु—रक्षन्तु ॥५॥

6

आऽअच्य । जानु । दक्षिणतः । निऽसद्य ।
इमम् । यज्ञम् । अभि । गृणीत । विश्वे ॥
मा । हिंसिष्ट । पितरः । केन । चित् । नः ।
यत् । वः । आगः । पुरुषता । कराम ॥६॥

Having sat down to the south with bended knee, do you all accept this sacrifice. Harm us not, *Pitṛs,* for any offence which through human (infirmity) we may have committed towards you.—6.

सा. भा.।—पितॄणामयं स्वाभाविको धर्मः 'अथैनं पितरः प्राचीनावीतिनः सव्यं जान्वाच्ये'ति वचनात्। हे पितरः, विश्वे सर्वे यूयं जान्वाच्य—भूमौ निपात्य दक्षिणतः—दक्षिणपार्श्वे निषद्य—उपविश्येमम्—अस्मदीयं यज्ञमभिगृणीत—अभिष्टुत। विशिष्टतृप्तियोगात् परया प्रीत्या सगुणोऽयं यज्ञ इति प्रशंसतेत्यर्थः। अपि च वः—युष्माकं यत्किञ्चित्कर्मवैगुण्यजनितम् आगः—अपराधं पुरुषता—मनुष्यत्वेन हेतुना कराम—वयं कृतवन्तः, हे पितरः, तेन केनचिदप्यपराधेन नः—अस्मान्मा हिंसिष्ट ॥६॥

7

आसीनासः | अरुणीनाम् | उपऽस्थे | रयिम् | धत्त | दाशुषे | मर्त्याय ॥

पुत्रेभ्यः | पितरः | तस्य | वस्वः | प्र | यच्छत | ते | इह | ऊर्जम् | दधात ॥७॥

Seated in the proximity of the radiant (flames of the altar), bestow riches on the mortal offerer (of the oblation); give wealth, *Pitṛs*, to his sons; do you who are present grant us vigour.—7.

सा. भा.।—अरुणीनाम्—आरोचमानानां ज्वालानां वा देवतानां वा उपस्थे—समीपस्थाने वेद्याख्ये आसीनासः—उपविष्टाः पितरो यूयं दाशुषे—हविर्दत्तवते मर्त्याय—मनुष्याय यजमानाय रयिम्—धनं धत्त—दत्त। हे पितरः, यूयं तस्य—यजमानस्य पुत्रेभ्यो वस्वः—वसु धनं प्र यच्छत। ते तादृशा यूयमिह—अस्मिन्नस्मदीये कर्मणि ऊर्जम्—धनं दधात—निधत्त ॥७॥

अरुणीनाम् उपस्थे—The verse occurs in YV. xix. 63, where Mahīdhara applies the epithet, *purple-coloured* (अरुणीनाम्), to the wool, of which the blanket called *kutapa* is made, of which the Pitṛs are fond. Macdonell translates—'*on the lap of the ruddy dawns*'; '*ruddy woollen coverlets*—Muir; '*in the bosom of the purple mornings*—Griffith.

8

ये | नः | पूर्वे | पितरः | सोम्यासः ।

अनुऽऊहिरे | सोमऽपीथम् | वसिष्ठाः ॥

तेभिः | यमः | सम्ऽरराणः | हवींषि ।

उशन् | उशत्ऽभिः | प्रतिऽकामम् | अत्तु ॥८॥

May Yama, being propitiated, desirous (of the offering), partake at pleasure of the oblations along with those our ancient progenitors the *Saumyas*, the possessors of great wealth, who also desire it, and who conveyed the *Soma* beverage (to the gods and to the *Pitṛs*) in order.—8.

सा भा.।—सोम्यासः—सोमसम्पादिनो वसिष्ठाः—वस्तृतमाः कृताच्छादना धनवत्तमा वा नः—अस्माकं ये पूर्वे पितरः सोमपीथम्—सोमपानमनूहिरे—आनुपूर्व्येण देवेभ्यश्च पितृभ्यश्च प्रासवन्तः। दत्तवन्त इत्यर्थः। उशन्—पितृभिः सह सम्भोगं कामयमानो यमः पितृपतिरुशद्भिः—यमेन सह सम्भोगं कामयमानैस्तेभिः—तैरस्मदीयैः पितृभिः सह रराणः—रममाणो हवींष्यस्माभिर्दत्तानि प्रतिकामम्—कामं कामं प्रत्यत्तु। यानि यानि हवींषि कामयते तानि तानि भक्षयत्वित्यर्थः ॥८॥

वसिष्ठाः—acc. to Mahīdhara, YV. xix. 51, '*of the race of Vasiṣṭha*'.

---

## Hymn No. 26

## PURUṢA-SŪKTA

x. 90

*Introductory Notes*

There are a few hymns dealing with cosmogony or the creation of the world. These hymns speak of creation as the evolution from some original material. In these hymns we get the clear conception of a creator distinct from any of the ordinary gods and superior to them all. He appears under the various names of Puruṣa, Viśvakarman, Hiraṇyagarbha or Prajāpati. The renowned Puruṣa-Sūkta is one of these cosmogonic hymns. In this hymn we find described in clear terms how the whole universe, with its animate and inanimate divisions, has emanated from, and is sustained by the Primeval Being called Puruṣa.

Here it is mentioned that the material, out of which the world is made, is the body of Puruṣa. Puruṣa, having comprised within himself all the created beings, is represented here as possessed of a thousand or an infinite number of heads, eyes, and feet, alluding evidently to those of all the living creatures of whom he is the aggregate,—a truth taught in the

Upaniṣads and in the Vedanta Philosophy. The act of creation is here treated as a sacrifice, Puruṣa being conceived as the victim, the parts of which, when cut up, became the different sections of the creation and portions of the universe. His head became the sky, his navel the air, his feet the earth. From his mind sprang the moon, from his eye the sun, from his breath the wind. The whole universe, all that has been and all that shall be, is but a partial manifestation of this supreme Deity. Even the gods, the four castes, the entire animal world and all the Vedas have sprung from him. Only a quarter part of him constitutes all creatures, and his major portion (three-fourths) is unmanifested and is far beyond the phenomenal world.

This hymn is of particular philosophical importance, and has been rightly looked upon as containing in a nut-shell the germs of philosophical speculations which are found to be elaborately developed in the Upaniṣads.

Historically also the importance of this hymn is no mean one, as we find here the distinct mention of the three Vedas and of the four castes together.[1] Moreover, it is one of the most popular hymns occurring, as it does, in all the extant Vedas (Yajur Veda, VS. 31. 1. 16; AV. xix. 6; SV., Āraṇya Saṁhitā of the Kauthuma school, vi. 3-8).

Western scholars, however, call this hymn an interpolation and of later origin, and they find its language modern. But this is in no way supported by the traditional views of the Indians.

1

सहस्रऽशीर्षा | पुरुषः | सहस्रऽअक्षः | सहस्रऽपात् ॥
सः | भूमिम् | विश्वतः | वृत्वा | अति | अतिष्ठत् | दशऽअङ्गुलम् ॥१॥

Thousand-headed is Puruṣa, thousand-eyed, (and) thousand-footed; he having covered the earth in all directions, exceeds (it) by ten fingers.—1

सा. भा. ।—'सहस्रशीर्षे'ति षोडशर्चं षष्ठं सूक्तम् । नारायणो नामर्षिरन्त्या त्रिष्टुप् शिष्टा अनुष्टुभः । अव्यक्तमहदादिविलक्षणश्चेतनो यः पुरुषः 'पुरुषान्न परं किञ्चित् (का॰ उ॰ ३. ११) इत्यादिश्रुतिषु प्रसिद्धः । स देवता । तथा चानुक्रान्तम्—'सहस्रशीर्षा षोडश नारायणः पौरुषमानुष्टुभं त्रिष्टुबन्तन्त्वि'ति । गतो विनियोगः ॥

[1] Besides the clear and definite mention of the four castes in verse 12 of this hymn, there are many passages pointing clearly to the existence of the caste system, *e.g.*, viii. 35. 16, 18; see notes on verse 12.

सर्वप्राणिसमष्टिरूपो ब्रह्माण्डदेहो विराडाख्यो यः पुरुषः सोऽयं सहस्रशीर्षा। सहस्रशब्दस्योपलक्षणत्वादनन्तैः शिरोभिर्युक्त इत्यर्थः। यानि सर्वप्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात्तदीयान्येवेति सहस्रशीर्षत्वम्। एवं सहस्राक्षित्वं सहस्रपात्त्वञ्च। स पुरुषो भूमिम्—ब्रह्माण्डगोलकरूपां विश्वतः—सर्वतो वृत्वा—परिवेष्ट्य दशाङ्गुलम्—दशाङ्गुलपरिमितं देशमत्यतिष्ठत्—अतिक्रम्य व्यवस्थितः। दशाङ्गुलमित्युपलक्षणम्। ब्रह्माण्डाद् बहिरपि सर्वतो व्याप्यावस्थित इत्यर्थः ।१।

अत्यतिष्ठत् दशाङ्गुलम्—Ten fingers, are, of course, not here literally meant. All that seems intended is that the whole universe is included in Puruṣa, who, infinite as he is, extends far beyond it. This multiform creation including the living and the non-living, is but his partial manifestation. (*cf.* verses 3, 4, this hymn, also 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्',—Gītā, x. 42). This fact of his immanence and transcendental nature is poetically expressed in the second half—'that he covers the entire universe and *exceeds it by a space of ten fingers.*'

Sāy. in the AV. xix. 6. 1. and Mahīdhara in YV. 31. 1. propose an altern. explanation, *viz.*, 'the human soul, extending from the navel, takes up its abode in the heart' (दशाङ्गुलम्). Colebrooke and Burnouf[1] seem to follow this explanation. 'A space ten fingers wide is the region of the heart of man, wherein the soul is supposed to reside. As the Universal Soul he pervades the universe, as the Individual Soul he is enclosed in a space of narrow dimensions'—Griffith.

2

पुरुषः । एव । इदम् । सर्वम् । यत् । भूतम् । यत् । च । भव्यम् ॥
उत । अमृतऽत्वस्य । ईशानः । यत् । अन्नेन । अतिऽरोहति ॥२॥

Puruṣa is, verily, this all that has been and all that is to be. He is the lord of immortality, and is all that grows with food.—2.

सा. भा ।—यदिदम्—वर्तमानं जगत् तत् सर्वं पुरुष एव। यच्च भूतम्—अतीतं जगत् यच्च भव्यम्—भविष्यत् जगत् तदपि पुरुष एव। यथास्मिन् कल्पे वर्तमानाः प्राणिदेहाः सर्वेऽपि विराट्पुरुषस्यावयवास्तथैवातीतागामिनोरपि कल्पयोर्द्रष्टव्यमित्यभिप्रायः। उत—अपि च अमृतत्वस्य

[1] This hymn has been translated by Colebrooke, Misc. Essays, Vol. I. 167, and by Burnouf, Introd. to the Bhāgavata-Purāṇa, Vol. I, p. cxxiii; see also Muir, OST. Vol. I. 6-11; Vol. V. 468-73.

—देवत्वस्यायमीशानः—स्वामी। यत्—यस्मात् कारणादन्नेन—प्राणिनां भोग्येनान्नेन निमित्त-भूतेनातिरोहति—स्वकीयां कारणावस्थामतिक्रम्य परिदृश्यमानां जगदवस्थां प्राप्नोति तस्मात् प्राणिनां कर्मफलभोगाय जगदवस्थास्वीकारान्नेदं तस्य वास्तवत्वमित्यर्थः ॥२॥

यदन्नेनातिरोहति—Colebrooke comments—'he is that which grows by nourishment'; Peterson—'(Puruṣa is) whatever is nourished or increased by food. The construction is the same as that of the first line, the words उतामृतत्वस्येशानः (of the 3rd pāda) being parenthetic'; Ludwig,—'he is the lord of immortality since he stretches far above what exists by food.' The commentators on the VS. and Svet. Up.—'he is also the lord of that which grows by food.'[1] Cf. the paraphrase of this pāda in the Bhāgavata Purāṇa (v. 8)—'चक्रे यामाय ये'।

3

एतावान् । अस्य । महिमा । अतः । ज्यायान् । च । पुरुषः ॥
पादः । अस्य । विश्वा । भूतानि । त्रिऽपात् । अस्य । अमृतम् । दिवि ॥३॥

Such is his greatness, Puruṣa is greater still; a quarter part of him is all created beings, three quarters of him are what is immortal in heaven.—3.

सा. भा.।—अतीतानागतवर्तमानरूपं जगद्यावदस्ति एतावान् सर्वोऽप्यस्य पुरुषस्य महिमा—स्वकीयसामर्थ्यविशेषः। नतु तस्य वास्तवस्वरूपम्। वास्तवस्तु पुरुषोऽतः—महिम्नोऽपि ज्यायान्—अतिशयेनाधिकः। एतच्चोभयं स्पष्टीक्रियते। अस्य—पुरुषस्य विश्वा—सर्वभूतानि—कालत्रयवर्तीनि प्राणिजातानि पादः—चतुर्थोऽंशः। अस्य पुरुषस्यावशिष्टं त्रिपात्स्वरूपममृतम्—विनाशरहितं सत् दिवि—द्योतनात्मके स्वप्रकाशस्वरूपे। व्यवतिष्ठत इति शेषः। यद्यपि 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्याम्नातस्य परब्रह्मण इयत्ताभावात् पादचतुष्टयं निरूपयितुमशक्यं तथापि जगदिदं ब्रह्मस्वरूपापेक्षयाल्पमिति विवक्षितत्वात् पादत्वोपन्यासः ॥३॥

एतावानस्य—In conformity with the rules of Vedic sandhi, the form should have been एतावाँ अस्य; Western scholars are of opinion that this is a sign of the lateness of Maṇḍala X, particularly of this hymn. A similar sandhi occurs also in 'पुत्राना' (पुत्रान् आ) instead of पुत्राँ आ, x. 85. 45.

पूरुषः—Mark the prolongation of the first syllable in the Saṁ. pāṭha. Pāṇ. vi. 3. 137.

[1] AV. (xix. 6. 4) reads 'यदन्येनाभवत् सह'—he is also the lord of immortality since he became united with another.—Muir.

The 2nd half emphasises the transcendentality and immanence of Puruṣa; for a parallel idea, *cf.* AV. x. 8. 7, 'अर्धेन विश्वं भुवनं जजान यदस्यार्धं क तद् बभूव,' with the half he produced the whole world; but what of that which was the other half of him?' *Cf.* also x. 8. 13; x. 7. 8. 9. Muir, OST. V. 368-69.

4

त्रिऽपात् । ऊर्ध्वः । उत् । ऐत् । पुरुषः । पादः । अस्य । इह । अभवत् । पुनरिति ॥
ततः । विष्वङ् । वि । अक्रामत् । साशनानशने इति । अभि ॥४॥

By three-fourths Puruṣa rises above (this cosmic world); one-fourth of him comes into existence here again and again; and he pervades on all sides, in all that eats or that does not (*i.e.*, all animate and inanimate beings).—4.

सा. भा. ।—योऽयं त्रिपात् पुरुषः—संसाररहितो ब्रह्मस्वरूपः सोऽयमूर्ध्वं उदैत्—अस्मादज्ञानकार्यात् संसाराद् बहिर्भूतोऽत्रत्यैर्गुणदोषैरस्पृष्ट उत्कर्षेण स्थितवान्। तस्यास्य सोऽयं पादः—लेशः सोऽयमिह—मायायां पुनरभवत्—सृष्टिसंहाराभ्यां पुनः पुनरागच्छति। अस्य सर्वस्य जगतः परमात्मलेशत्वं भगवताप्युक्तम्—'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्।' (भ° गी° १०. ४२) इति। ततः—मायायामागत्यनन्तरं विष्वङ्—देवमनुष्यतिर्यगादिरूपेण विविधः सन् व्यक्रामत्—व्याप्तवान्। किं कृत्वा? साशनानशने अभिलक्ष्य। साशनं भोजनादिव्यवहारोपेतं चेतनं प्राणिजातम् अनशनं तद्रहितमचेतनं गिरिनद्यादिकं तदुभयं यथा स्यात्तथा स्वयमेव विविधो भूत्वा व्याप्तवानित्यर्थः ॥४॥

उदैत्—rises upward, to the world of immortals. ऐत् imperf. (लङ्) of √इ, *to go*, for pres.

साशनानशने—*lit.* those who take food and those who do not, *i.e.*, the animate and the inanimate.

इहाभवत् पुनः—comes into being repeatedly either in individuals by birth and death, or in the world by its temporary dissolution or renovation.

5

तस्मात् । विऽराट् । अजायत । विऽराजः । अधि । पुरुषः ॥
सः । जातः । अति । अरिच्यत । पश्चात् । भूमिम् । अथो इति । पुरः ॥५॥

From him Virāj sprang, from Virāj Puruṣa. He on being born extended beyond the earth, next he created the earth, (and) then the bodies of all beings.[1]—5.

सा. भा. ।—'विष्वङ् व्यक्रामदि'ति (४ मन्त्रे) यदुक्तं तदेवात्र प्रपञ्चयते । तस्मात्—आदि-पुरुषाद्विराट्—ब्रह्माण्डदेहोऽजायत—उत्पन्नः । विविधानि राजन्ते वस्तून्यत्रेति विराट् । विराजोऽधि—विराड्देहस्योपरि तमेव देहमधिकरणं कृत्वा पुरुषः—तद्देहाभिमानी पुमानजायत । सोऽयं सर्ववेदान्तवेद्यः परमात्मा स्वयमेव स्वकीयया मायया विराड्देहं ब्रह्माण्डरूपं सृष्ट्वा तत्र जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवोऽभवत् । एतच्चाथर्वणिका उत्तरतापनीये (१.९) विस्पष्टमामनन्ति—'स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते माययेति । स जातः—विराट् पुरुषोऽत्यरिच्यत—अतिरिक्तोऽभूत् । विराड्व्यतिरिक्तो देवतिर्यङ्मनुष्यादिरूपोऽभूत् । पश्चाद्—देवादिजीवभावादूर्ध्वं भूमिम् । ससर्जेति शेषः । अथो—भूमिसृष्टेरनन्तरं तेषां जीवानां पुरः ससर्ज । पूर्यन्ते सप्तभिर्धातुभिरिति पुरः शरीराणि ॥५॥

तस्मात्—Sāy. explains it as 'from the Ādipuruṣa'; (it) 'probably means from that one-fourth'—Wilson; 'from the undeveloped quarter of Puruṣa'—Macdonell.

विराट्—*Virāj* is said to have come in the form of the mundane egg, from *Ādi-puruṣa*, the Primæval Being or the Supreme Spirit, who, by his māyā or the power of illusion, according to the Vedānta philosophy, created the body of *Virāj* and entered into it, animating the same as the vital soul. Sāy. interprets *Virāj* here as the cosmic body and *Puruṣa* as the cosmic Spirit. A difficulty arises, however, as to how *Virāj* can be the progenitor and the product of *Puruṣa*. But this theory of reciprocal origination is not an unusual conception in the Veda; *cf.* 'अदितेर्दक्षो अजायत दक्षाद्वदितिः परि,' x. 72. 4. Compare also AV. xiii. 11. 29 ff, where Indra is said to be produced from a great many different phenomena or elements and they reciprocally from him. *Vide* Muir's notes on the passage, OST. V. 369-70, and Wallis, 'Cosmology of Rigveda', p. 87. For further development of this cosmogonical conception, compare Manu, Chap. I, verses 8-11.

'It will be observed that Manu applies the term *Puruṣa* to three beings; (1) to Brahmā (i. 11), (2) to the male formed by Brahmā from the half of his own body (i. 32), and (3) to *Virāj*, the offspring of the male and female halves of Brahmā's body (i. 33).' Muir, OST. Vol. I. 36. f. n. '*Virāj*': an intermediate between the primæval Puruṣa and the evolved Puruṣa'—Macdonell.

[1] Macdonell takes पुरः in a different sense as an antonym of पश्चात्, and connecting both together here renders :—'when born he reached beyond the earth, behind and before.' भूमिम् has been construed by him with अत्यरिच्यत ।

6

यत् । पुरुषेण । हविषा । देवाः । यज्ञम् । अतन्वत ॥
वसन्तः । अस्य । आसीत् । आज्यम् । ग्रीष्मः । इध्मः । शरत् । हविः ॥६॥

When the gods celebrated a sacrifice with Puruṣa as their offering, then the spring became its ghee, the summer its fuel, the autumn its oblation.—6.

सा. भा. ।—यत्—यदा पूर्वोक्तक्रमेणैव शरीरेषूत्पन्नेषु सत्सु देवा उत्तरसृष्टिसिद्ध्यर्थं बाह्यद्रव्यस्यानुत्पन्नत्वेन हविरन्तरासम्भवात् पुरुषस्वरूपमेव मनसा हविष्ट्वेन संकल्प्य पुरुषेण—पुरुषाख्येन हविषा मानसं यज्ञमतन्वत—अन्वतिष्ठन्। तदानीम् अस्य—यज्ञस्य वसन्तः—वसन्तर्तुरेवाज्यमासीत्—अभूत्। तमेवाज्यत्वेन संकल्पितवन्त इत्यर्थः। तथा ग्रीष्म इध्म आसीत् तथा शरत् हविरासीत्। तामेव पुरोडाशादिहविष्ट्वेन सङ्कल्पितवन्त इत्यर्थः। पूर्वं पुरुषस्य हविःसामान्यरूपत्वेन सङ्कल्पः। अनन्तरं वसन्तादीनामाज्यादिविशेषरूपत्वेन सङ्कल्प इति द्रष्टव्यम् ॥६॥

यज्ञमतन्वत—The sacrifice here is mental or imaginary (मानसः), because it is from *Puruṣa* and not from the real sacrifice that all things were generated. The underlying idea of this verse appears to be that *Puruṣa* divided himself and evolved himself in the manifold forms of the different sections of the creations, *cf.* 'एकोऽहं बहु स्याम्', etc. The act of creation is here poetically described as a sacrifice, in which Puruṣa is the victim, his parts when cut up becoming portions of the universe.

7

तम् । यज्ञम् । बर्हिषि । प्र । औक्षन् । पुरुषम् । जातम् । अग्रतः ॥
तेन । देवाः । अयजन्त । साध्याः । ऋषयः । च । ये ॥७॥

They besprinkled that Puruṣa, born before creation, as the sacrifice (the victim in the sacrifice) on the sacred grass; with him the gods, the Sādhyas and the Ṛṣis sacrificed.—7.

सा. भा. ।—यज्ञम्—यज्ञसाधनभूतं तं पुरुषं पशुत्वभावनया यूपे बद्धं बर्हिषि—यज्ञे । मानसे इत्यर्थः। प्रौक्षन्—प्रोक्षितवन्तः। कीदृशमित्यत्राह—अग्रतः—सर्वसृष्टेः पूर्वं पुरुषं जातम्—पुरुषत्वेनोत्पन्नम्। एतच्च प्रागेवोक्तम् (५ मन्त्रे)—'तस्माद्विराडजायत विराजो अधि पुरुष' इति। तेन—पुरुषरूपेण पशुना देवा अयजन्त—मानसयागं निष्पादितवन्त इत्यर्थः। के ते

देवा इत्यत्राह साध्याः—सृष्टिसाधनयोग्याः प्रजापतिप्रभृतयः। तदनुकूला ऋषयः—मन्त्रद्रष्टारश्च ये सन्ति ते सर्वेऽप्ययजन्तेत्यर्थः ॥७॥

साध्याः—A class of divine beings, *cf.* 'यत्र पूर्वे साध्याः सन्ति देवाः', v. 16. Sāy. means, however, those who are competent to create, *i.e.*, Prajāpati and the like.

## 8

तस्मात् । यज्ञात् । सर्वऽहुतः । सम्ऽभृतम् । पृषत्ऽआज्यम् ॥
पशून् । तान् । चक्रे । वायव्यान् । आरण्यान् । ग्राम्याः । च । ये ॥८॥

From that sacrifice, fully performed, was produced—ghee; he then created the aerial creatures, the beasts of the forest, and those dwelling in villages.—8.

सा. भा. ।—सर्वहुतः। सर्वात्मकः पुरुषो यस्मिन् यज्ञे हूयते सोऽयं सर्वहुत्। तादृशात् तस्मात्—पूर्वोक्तान्मानसात् यज्ञात् पृषदाज्यं सम्भृतम्—सम्पादितम्। दधि चाज्यञ्चेत्येवमादि भोग्यजातं सर्वं सम्पादितमित्यर्थः। तथा वायव्यान्—वायुदेवताकाँल्लोकप्रसिद्धानारण्यान् पशूंश्चक्रे—उत्पादितवान्। आरण्या हरिणादयः। तथा ये च ग्राम्या गवाश्वादयस्तानपि चक्रे पशूनामन्तरिक्षद्वारा वायुदेवत्यत्वं यजुर्ब्राह्मणे समाम्नायते—'वायवः स्थेत्याह वायुर्वा अन्तरिक्षस्याध्यक्षः। अन्तरिक्षदेवत्याः खलु वै पशवः। वायव एवैनान् परिददाति' (तै॰ ब्रा॰ ३.२.१.३) इति ॥८॥

## 9

तस्मात् । यज्ञात् । सर्वऽहुतः । ऋचः । सामानि । जज्ञिरे ॥
छन्दांसि । जज्ञिरे । तस्मात् । यजुः । तस्मात् । अजायत ॥९॥

From that sacrifice fully performed, were produced the *Ṛcas* and the *Sāmans*; the metres sprang from it; the *Yaju* , from the same, was born.—9.

सा. भा. ।—सर्वहुतस्तस्मात् पूर्वोक्ताद् यज्ञाद् ऋचः सामानि जज्ञिरे—उत्पन्नाः। तस्मात्—यज्ञाच्छन्दांसि गायत्र्यादीनि जज्ञिरे। तस्मात्—यज्ञात् यजुरप्यजायत ॥९॥

ऋचः, सामानि, यजुः—The Western scholars hold that this is the first reference in the Ṛgveda to the other Vedas, but this does not seem to be true. We have clear mention of the Sāman in viii. 95.7; cf. 'एतो न्विन्द्र'

सवाम यज्ञं यज्ञेन मायाः'. Again the chanters of the hymns of the Sámaveda (गायिनः and गायत्रिणः) are alluded to respectively in 1. 7. 1, and 1. 10. 1. Moreover, बृहत् meaning the Bṛhat-Sāman is mentioned in i. 7. 1; viii. 89. 1, 7.

छन्दांसि—Sāyaṇa explains the term to mean simply the *metres*, e.g., *Gāyatrī*, etc. Muir, Griffith and Peterson are of opinion that the Atharvaveda may be referred to under the appellation of छन्दस्, see Muir, OSṬ. V. 2.

10

तस्मात् | अश्वाः | अजायन्त | ये | के | च | उभयादतः ॥

गावः | ह | जज्ञिरे | तस्मात् | तस्मात् | जाताः | अजावयः ॥१०॥

From that sprang horses, and all such animals as have two rows of teeth; cows were generated from that; from that were born goats and sheep.—10.

सा. भा. ।—तस्मात्—पूर्वोक्ताद् यज्ञात् अश्वा अजायन्त—उत्पन्नाः। तथा ये के चाश्वव्यतिरिक्ता गर्दभा अश्वतराश्च उभयादतः—ऊर्ध्वाधोभागयोरुभयोर्दन्तयुक्ताः सन्ति तेऽप्यजायन्त। तथा तस्मात्—यज्ञात् गावो ह—गावश्च जज्ञिरे। किञ्च तस्मात्—यज्ञादजावयश्च जाताः ॥१०॥

11

यत् | पुरुषम् | वि | अदधुः | कतिधा | वि | अकल्पयन् ॥

मुखम् | किम् | अस्य | कौ | बाहू इति | कौ | ऊरू इति |

पादौ | उच्येते इति ॥११॥

When (the gods) divided Puruṣa, into how many parts did they shape him? What was his mouth, what were his arms, what were his thighs, what were his feet called?—11.

सा. भा. ।—प्रश्नोत्तररूपेण ब्राह्मणादिसृष्टिं वक्तुं ब्रह्मवादिनां प्रश्ना उच्यन्ते। प्रजापतेः प्राणरूपा देवा यत्—यदा पुरुषम्—विराड्रूपं व्यदधुः—सङ्कल्पेनोत्पादितवन्तस्तदानीं कतिधा—कतिभिः प्रकारैर्व्यकल्पयन्—विविधं कल्पितवन्तः। अस्य—पुरुषस्य मुखं किमासीत्? कौ बाहू अभूताम्? कौ ऊरू? कौ च पादावुच्येते। प्रथमं सामान्यरूपः प्रश्नः पश्चा'न्मुखं किमि'त्यादिना विशेषविषयाः प्रश्नाः ॥११॥

## 12

ब्राह्मणः । अस्य । मुखम् । आसीत् । बाहू इति । राजन्यः । कृतः ॥
ऊरू इति । तत् । अस्य । यत् । वैश्यः । पत्ऽभ्याम् । शूद्रः । अजायत ॥१२॥

The *Brāhmaṇa* was his mouth; the *Rājanya* (the military caste) was made his two arms; the *Vaiśya* was his thighs; the *Śūdra* sprang from his feet.—12.

सा. भा. ।—इदानीं पूर्वोक्तानां प्रश्नानामुत्तराणि दर्शयति । अस्य—प्रजापतेर्ब्राह्मणः—ब्राह्मणत्वजातिविशिष्टः पुरुषो मुखमासीत्—मुखादुत्पन्न इत्यर्थः । योऽयं राजन्यः—क्षत्रियत्वजातिमान् पुरुषः स बाहू कृतः—बाहुत्वेन निष्पादितः । बाहुभ्यामुत्पादित इत्यर्थः । तत्—तदानीमस्य प्रजापतेर्यदूरू तद्रूपो वैश्यः सम्पन्नः ऊरुभ्यामुत्पन्न इत्यर्थः । तथास्य पद्भ्याम्—पादाभ्यां शूद्रः—शूद्रत्वजातिमान् पुरुषोऽजायत । इयं च मुखादिभ्यो ब्राह्मणादीनामुत्पत्तिर्यजुःसंहितायां सप्तमकाण्डे—'स मुखतस्त्रिवृतं निरमिमीते'त्यादौ विस्पष्टमाम्नाता । अतः प्रश्नोत्तरे उभे अपि तत्परतयैव योजनीये ॥१२॥

ब्राह्मणः, राजन्यः, वैश्यः, शूद्रः;—The Western scholars are of opinion that this hymn is an interpolation inasmuch as here for the first and only time in the Ṛgveda the four castes are clearly mentioned. But the passages like—'उतासि मैत्रावरुणो वसिष्ठ···ब्रह्मन् मनसोऽधिजातः', vii. 33. 11; 'सोमं यं ब्रह्माणो विदुः', x. 85. 3; 'तावद्दधात्युपयज्ञमायन् ब्राह्मणो होतुरवरो निषीदन्,' x. 88. 19; संवत्सरं शशयाना ब्राह्मणा व्रतचारिणः,' vii. 103. 1; 'ब्राह्मणा ये मनीषिणः,' i. 164. 45, etc.—decisively prove that the designation and function of Brāhmaṇa as a caste are not of infrequent occurrence. The mention of Kṣatriya as a race is found in iv. 42. 1 and vii. 64. 2. Moreover, five castes (Pañca-janāḥ, Pañca-kṣitayaḥ, etc.) are often mentioned in the RV., and explained by the old commentators (like Aurṇavābha, who were much anterior to Yāska and were in touch with the Vedic traditions),—to denote the four principal castes and the barbarians as the fifth.*

See also Zimmer, AIL. 162-177, dealing with the origin of castes. Ludwig asserts the existence of the caste system, (RV. 3. 216 *ff*., 249-256). Kaegi remarks—'The system is distinctly enunciated in x. 90. 12, but many passages seem to point clearly to its existence, *e.g.*, viii. 35. 16, 17, 18, where classes are designated almost certainly: may the *Brahma* prosper;...may the *kṣatra* (quality of warrior) prosper;...may the cows (special profession of the Vaiśya) prosper,' etc.

* The inquisitive student may consult Muir, OST., Vol. I, pp. 14-16, where Dr. Haug's views on the origination of the castes and the passages from the T.S. have been quoted *in extenso*.

13

चन्द्रमाः । मनसः । जातः । चक्षोः । सूर्यः । अजायत ॥

मुखात् । इन्द्रः । च । अग्निः । च । प्राणात् । वायुः । अजायत ॥१३॥

The moon sprang from his mind; the sun was born from his eyes; Indra and Agni from his mouth; Vāyu was generated from his breath.—13.

सा. भा.।—यथा दध्याज्यादिद्रव्याणि गवादयः पशव ऋगादिवेदा ब्राह्मणादयो मनुष्याश्च तस्मादुत्पन्ना एवं चन्द्रादयो देवा अपि तस्मादेवोत्पन्ना इत्याह प्रजापतेर्मनसः सकाशाच्चन्द्रमा जातः। चक्षोः—चक्षुषः सूर्योऽप्यजायत। अस्य मुखादिन्द्रश्चाग्निश्च देवावुत्पन्नौ। अस्य प्राणाद्वायुरजायत ॥१३॥

14

नाभ्याः । आसीत् । अन्तरिक्षम् । शीर्ष्णः । द्यौः । सम् । अवर्तत ॥

पद्ऽभ्याम् । भूमिः । दिशः । श्रोत्रात् । तथा । लोकान् । अकल्पयन् ॥१४॥

From his navel was created the firmament; from his head the heaven came to be; from his feet the earth; from his ear the regions; thus they (the gods) fashioned the worlds.—14.

सा. भा.।—यथा चन्द्रादीन् प्रजापतेर्मनःप्रभृतिभ्योऽकल्पयंस्तथान्तरिक्षादीँल्लोकान् प्रजापतेर्नाभ्यादिभ्यो देवा अकल्पयन्—उत्पादितवन्तः। एतदेव दर्शयति। नाभ्याः—प्रजापतेर्नाभेरन्तरिक्षमासीत्। शीर्ष्णः—शिरसो द्यौः समवर्तत—उत्पन्ना। अस्य पद्भ्याम्—पादाभ्यां भूमिरुत्पन्ना। अस्य श्रोत्रात् दिश उत्पन्नाः ॥१४॥

15

सप्त । अस्य । आसन् । परिऽधयः । त्रिः । सप्त । सम्ऽइधः । कृताः ॥

देवाः । यत् । यज्ञम् । तन्वानाः । अबध्नन् । पुरुषम् । पशुम् ॥१५॥

Seven were his enclosures; thrice seven pieces of fuel were made, when the gods, celebrating the sacrifice, bound Puruṣa as the victim.—15.

सा. भा.।—अस्य—साङ्कल्पिकयज्ञस्य गायत्र्यादीनि सप्त छन्दांसि परिधय आसन्। ऐष्टिकस्याहवनीयस्य त्रयः परिधय उत्तरवेदिकास्त्रय आदित्यश्च सप्तमः परिधिप्रतिनिधिरूपः। अतएवाम्नायते—'न पुरस्तात्परिदध्यादित्यादित्यो ह्येव उद्यन् पुरस्तात् रक्षांस्यपहन्ती'ति। तत एत आदित्यसहिताः सप्तपरिधयोऽत्र सप्तच्छन्दोरूपाः। तथा समिधस्त्रिःसप्त त्रिगुणीकृत-सप्तसंख्याका एकविंशतिः कृताः। 'द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंश' इति श्रुताः पदार्था एकविंशतिदारुयुक्तेन्धनत्वेन भाविताः। यत्—यः पुरुषो वैराजोऽस्ति तं पुरुषं देवाः—प्रजापतिप्राणेन्द्रियरूपा यज्ञम्—मानसं यज्ञं तन्वानाः—कुर्वाणाः पशुमबध्नन्। विराट्पुरुषमेव पशुत्वेन भावितवन्तः। एतदेवाभिप्रेत्य पूर्वत्र—'यत्पुरुषेण हविषे'त्युक्तम् (११ मन्त्रे) ॥१५॥

सप्त परिधयः—Acc. to Sāyaṇa—the seven metres, *Gāyatrī*, etc., or the seven shallow trenches, three of which were dug round the *Āhavanīya* fire-place, three round the northern altar and the seventh an imaginary one dug round the sun to keep off evil spirits. Acc. to Mahīdhara,—the seven oceans. Colebrooke renders the word by 'moats'. Macdonell has the note:—'the green sticks put round the sacrificial fire to fence it in, generally three in number; *sapta* signifies a sacred number'. Griffith says—'the seven pieces of wood laid round the sacrificial fire to enclose it'.

## 16

यज्ञेन । यज्ञम् । अयजन्त । देवाः । तानि । धर्माणि । प्रथमानि । आसन् ॥
ते । ह । नाकम् । महिमानः । सचन्त । यत्र । पूर्वे । साध्याः । सन्ति । देवाः ॥१६॥

With the sacrifice, the gods sacrificed to (him, Puruṣa, who is also) the sacrifice; these were the earliest holy rites; these mighty ones assemble in heaven, where the ancient divinities, the Sādhyas abide.—16.

सा. भा.।—पूर्वं प्रपञ्चेनोक्तमर्थं संक्षिप्यात्र दर्शयति—देवाः—प्रजापतिप्राणरूपा यज्ञेन—यथोक्तेन मानसेन सङ्कल्पेन यज्ञम्—यथोक्तयज्ञस्वरूपं प्रजापतिमयजन्त—पूजितवन्तः। तस्मात् पूजनात् तानि—प्रसिद्धानि धर्माणि—जगद्रूपविकाराणां धारकाणि प्रथमानि—मुख्यान्यासन्। एतावता सृष्टिप्रतिपादकसूक्तभागार्थः सङ्गृहीतः। अथोपासनतत्फलानुवादकभागार्थः संगृह्यते। यत्र—यस्मिन् विराट्प्राप्तिरूपे नाके पूर्वे साध्याः—पुरातना विराडुपास्तिसाधका देवाः सन्ति—तिष्ठन्ति तत्र नाकं विराट्प्राप्तिरूपं स्वर्गं ते महिमानः—तदुपासका महात्मानः सचन्त—समवयन्ति प्राप्नुवन्ति ॥१६॥

This verse is identical with i. 164. 50. and also with AV. vii. 5. 1. (AV., No. 4, p. 72, this book).

# Hymn No. 27

## HIRAṆYAGARBHA[1]

### x. 121.

*Introductory Notes*

There are a few hymns and passages of the Ṛgveda in which monotheistic or pantheistic tendency is most clearly manifested.

The verse i. 164. 46 conveys clearly the idea that all the gods, though differently named and represented, are in reality one.[2]

To the same effect is another verse (x. 114. 5), where it is laid down—'the wise represent under many forms the well-winged deity, who is but one (सुपर्णं ...विप्राः एकं सन्तं बहुधा कल्पयन्ति)'.

The verse i. 89. 10 suggests a pantheistic sense, as it asserts all things to be the manifestations of one universal, all-embracing Nature or Being (Aditi).

In some of the representations of the character and functions of Tvaṣṭṛ (x. 110, etc.), the divine artisan, who shaped the heaven and earth,

[1] This name occurs only here in the ṚV., but it is mentioned several times in the AV and in the Brāhmaṇa-literature. 'Hiraṇyagarbha is also alluded to in a passage of the AV. (iv. 2. 8) where it is stated that waters produced an embryo, which as it was being born was enveloped in a golden covering. In the TS. (5.5. 1. 2) Hiraṇyagarbha is expressly identified with Prajāpati. In the later literature he is chiefly a designation of the personal Brahmā'.

[2] This verse is considered by Yāska (Nir. 7. 18) to have reference to Agni, and by Kātyāyana and Sāyaṇa (the latter, however, quotes Yāska's opinion) to have Sūrya in view. The sense of the verse is—'they call him Indra, Mitra, Varuṇa, Agni; and (he is) the celestial, well-winged Garutmat. Sages name variously that which is but one, they call it Agni, Yama, Mātariśvan'.—See Colebrooke's Essay, i. 26 f.; Weber's Ind. Stud. v. p. iv.)

[3] *Cf.* AV. xiii. 3. 13, where it is said, in the same way—'Agni becomes Varuṇa in the evening, rising in the morning he is Mitra; becoming Savitṛ he moves through the air; becoming Indra he glows in the middle of the sky'. In xiii. 4. 1 ff. Savitṛ is identified with a great many other deities. The verse vii. 40-5, is interpreted by Sāyaṇa to mean—'the other gods are branches of this ...... god Viṣṇu'. In the verse ii. 35. 8, all other beings are said to be branches of Apāṃnapāt. In the lectures on the 'Science of Language,' 2nd series, p. 508, Prof. Max Müller understands the words with which all the verses of iii. 55 conclude ('महद्देवानामसुरत्वमेकम्') to signify 'the great divinity of the gods is one', which might be understood as if they asserted all the gods to be manifestations of one Supreme Deity.

we have an approach to the idea of a supreme creator of the universe. In the hymns x. 81 and 82, devoted to the celebration of Viśvakarman, the great architect of the universe, he is represented as the supreme creator.

Another name, under which the Deity is celebrated in the Ṛgveda with all the attributes of supremacy, is Hiraṇyagarbha. In the present hymn (x. 121) this god is said to have arisen (समवर्तत) in the beginning, the one lord of all that exists, who upholds heaven and earth, who gives life and breath, whose command even the gods obey, who is the god over all gods, and the one animating principle (असु, v. 7) of their being.

To quote Max Müller 'the whole hymn must have been ...... the expression of a yearning after one supreme deity, who had made heaven and earth, the sea and all that in them is'. Again in his History of Ancient Sanskrit Literature (pp. 569 *ff.*) Prof. Müller says: —'I add only one more hymn, in which the idea of one god is expressed with such power and decision that it will make us hesitate before we deny to the Aryan nation an instructive Monotheism'.

---

1

हिरण्यऽगर्भः । सम् । अवर्तत । अग्रे ।
भूतस्य । जातः । पतिः । एकः । आसीत् ॥
सः । दाधार । पृथिवीम् । द्याम् । उत । इमाम् ।
कस्मै । देवाय । हविषा । विधेम ॥१॥

Hiraṇyagarbha was present at the beginning; when born, he was the sole lord of all created beings; he upheld this earth and heavens,—let us offer worship with an oblation to the divine *KA*—1.

सा. भा. ।—'हिरण्यगर्भ' इति दशर्चं नवमं सूक्तं प्रजापतिपुत्रस्य हिरण्यगर्भाख्यस्यार्षम् । त्रैष्टुभम् । क-शब्दाभिधेयः प्रजापतिर्देवता । तथा चानुक्रान्तम्—'हिरण्यगर्भो दश हिरण्यगर्भः प्राजापत्यः कायमि'ति । गतः सूक्तविनियोगः । प्राजापत्यस्य पशोर्वपापुरोडाशहविषां क्रमेणादितस्तिस्रोऽनुवाक्यास्ततस्तिस्रो याज्याः । सूत्रितञ्च—'हिरण्यगर्भः समवर्तताग्र इति षट् प्राजापत्याः' (आ॰ ३. ८) इति । वरुणप्रघासेषु कायस्य हविषो 'हिरण्यगर्भ' इत्येषा याज्या । सूत्रितञ्च—'कया नश्चित्र आ भुवद्धिरण्यगर्भः समवर्तताग्र इति प्रतिप्रस्थाता वाजिने तृतीयः' (आ॰ २. १७) इति ॥

हिरण्यगर्भः—हिरण्मयस्याण्डस्य गर्भभूतः प्रजापतिर्हिरण्यगर्भः । तथा च तैत्तिरीयकम्—'प्रजापतिर्वै हिरण्यगर्भः प्रजापतेरनुरूपत्वाये'ति । यद्वा हिरण्मयोऽण्डो गर्भवद् यस्योदरे वर्तते सोऽसौ सूत्रात्मा हिरण्यगर्भ इत्युच्यते । अग्रे—प्रपञ्चोत्पत्तेः प्राक् समवर्तत—मायाध्यक्षात् सिसृक्षोः परमात्मनः सकाशात् समजायत । यद्यपि परमात्मैव हिरण्यगर्भस्तथापि तदुपाधिभूतानां वियदादीनां ब्रह्मण उत्पत्तेस्तदुपहितोऽप्युत्पन्न इत्युच्यते । स च जातः—जातमात्र एवैकः—अद्वितीयः सन् भूतस्य—विकारजातस्य ब्रह्माण्डादेः सर्वस्य जगतः पतिः—ईश्वर आसीत् । न केवलमेकः पतिरासीद् अपि तर्हि सः—हिरण्यगर्भः पृथिवीम्—विस्तीर्णां द्याम्—दिवमुत—अपि चेमाम्—अस्माभिर्दृश्यमानां पुरोवर्तिनीमिमां भूमिम् । यद्वा पृथिवीत्यन्तरिक्षनाम । अन्तरिक्षं दिवं भूमिं च दाधार—धारयति । 'छन्दसि लुङ्लङ्लिट' इति सार्वकालिको लिट् । तुजादित्वादभ्यासदीर्घः । कस्मै । अत्र किं-शब्दोऽनिर्ज्ञातस्वरूपत्वात् प्रजापतौ वर्तते । यद्वा सृष्ट्यर्थं कामयत इति कः । कर्मेडंप्रत्ययः । यद्वा कं सुखं तद्रूपत्वात् क इत्युच्यते । अथवेन्द्रेण पृष्टः प्रजापतिर्मदीयं महत्त्वं तुभ्यं प्रदायाहं कः कीदृशः स्यामित्युक्तवान् । स इन्द्रः प्रत्युवाच—यदिदं ब्रवीष्यहं कः स्यामिति तदेव त्वं भवेति । अतः कारणात् क इति प्रजापतिराख्यायते । 'इन्द्रो वै वृत्रं हत्वा सर्वा विजितीर्विजित्याब्रवीदि'त्यादिकं ब्राह्मणमत्रानुसन्धेयम् (ऐ॰ ब्रा॰ ३. २१) । यदासौ किं-शब्दस्तदा सर्वनामत्वात् स्मैभावः सिद्धः । यदा तु यौगिकस्तदा व्यत्ययेनेति द्रष्टव्यम् । 'सावेकाच' इति प्राप्तस्य 'नगोश्वन्साववर्णे'ति प्रतिषेधः । 'क्रियाग्रहणं कर्तव्यमि'ति कर्मणः सम्प्रदानत्वाच्चतुर्थी । कं प्रजापतिं देवाय—देवं दानादिगुणयुक्तं हविषा—प्राजापत्यस्य पशोर्वपारूपेणैककपालात्मकेन पुरोडाशेन वा विधेम—वयमृत्विजः परिचरेम । विधतिः परिचरणकर्मा ॥१॥

हिरण्यगर्भः—The golden embryo, or he who had the golden germ, *i.e.*, he who was in the golden mundane egg as an embryo; *Brahmā* the creator. In the last verse of this hymn, he is called Prajāpati, lord of created beings.

कस्मै देवाय...विधेम—This is the burden of every verse except the last. Acc. to Sāy. क means Prajāpati. But Western scholars translate:—' who is this God to whom we present our offering'.—See Schroeder, Indian Literature and Culture, p. 80; M. Müller, Ved. Hymns, i. pp. 11-13.

2

यः । आत्मऽदाः । बलऽदाः । यस्य । विश्वे ।
उपऽआसते । प्रऽशिषम् । यस्य । देवाः ॥
यस्य । छाया । अमृतम् । यस्य । मृत्युः ।
कस्मै । देवाय । हविषा । विधेम ॥२॥

(To him) who is the giver of soul, the giver of strength, whose commands—all (beings), even the gods obey, whose shadow is immortality, whose shadow is death,—let us offer worship with an oblation to the divine *KA*.—2.

सा. भा. ।—यः—प्रजापतिरात्मदाः—आत्मनां दाता । आत्मानो हि सर्वे तस्मात् परमात्मन उत्पद्यन्ते । यथाग्नेः सकाशाद्विस्फुलिङ्गा जायन्ते तद्वत् । यद्वा आत्मनां शोधयिता । दैप् शोधने । 'आतो मनिन्नि'ति विच् । बलदाः—बलस्य च दाता शोधयिता वा । यस्य च प्रशिषम् —प्रकृष्टं शासनमाज्ञां विश्वे—सर्वे प्राणिन उपासते—प्रार्थयन्ते सेवन्ते वा । शासु अनुशिष्टौ । 'शास इदि'त्युपधाया इत्वम् । 'शासिवसिघसीनां चे'ति षत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् । आसेरनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः । 'तिङि चोदात्तवती'ति गतिरनुदात्तः । तथा देवा अपि यस्य प्रशासनमुपासते । अपि चामृतम्—अमृतत्वम् । भावप्रधानो निर्देशः । यद्वामृतं मरणं नास्त्यस्मिन्नित्यमृतं सुधा । बहुव्रीहौ 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम् । तदपि यस्य प्रजापतेश्छाया—छायेव भवति मृत्युर्यमश्च प्राणापहारी छायेव भवति । तस्मै कस्मै देवायेत्यादि समानं पूर्वेण । हविषा पुरोडाशात्मनेति तु विशेषः ॥२॥

3

यः । प्राणतः । निऽमिषतः । महिऽत्वा । एकः । इत् । राजा । जगतः । बभूव ॥
यः । ईशे । अस्य । द्विऽपदः । चतुःऽपदः । कस्मै । देवाय । हविषा । विधेम ॥३॥

(To him) who, by his greatness, has verily become the sole king of the breathing and seeing world, who rules over the aggregate of two-footed and

four-footed beings,—let us offer worship with an oblation to the divine *KA*.—3.

सा. भा ।—यः—हिरण्यगर्भः प्राणतः—प्रश्वसतः । अन प्राणने । आदादिकः । 'शतुरनुम' इति विभक्तेरुदात्तत्वम् । निमिषतः—अक्षिपक्ष्मचलनं कुर्वतः । अत्रापि पूर्ववद्विभक्तिरुदात्ता । जगतः—जङ्गमस्य प्राणिजातस्य महित्वा—महत्त्वेन । 'सुपां सुलुगि'ति तृतीयाया आकारः । माहात्म्येनैक इत्—अद्वितीय एव सन् राजा बभूव—ईश्वरो भवति । भवतेर्णलि 'लिती'ति प्रत्ययात् पूर्वस्योदात्तत्वम् । अस्य—परिदृश्यमानस्य द्विपदः—पादद्वययुक्तस्य मनुष्यादेश्चतुष्पदः—गवाश्वादेश्च यः—प्रजापतिरीशे—ईष्टे । ईश ऐश्वर्ये । आदादिकोऽनुदात्तेत् । 'लोपस्त आत्मनेपदेष्वि'ति तलोपः । अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः । अस्य । 'ऊडिदमि'तीदमो विभक्तिरुदात्ता । द्वौ पादौ यस्य स द्विपात् । 'संख्यासुपूर्वस्ये'ति पादशब्दस्यान्त्यलोपः समासान्तः । भसंज्ञायां 'पादः पदि'ति पद्भावः । 'द्वित्रिभ्यां पाद्दन्नि'त्येकदेशविकृतस्यानन्यत्वादुत्तरपदान्तोदात्तत्वम् । स्वरवर्जमेषैव चतुष्पद इत्यत्रापि प्रक्रिया । 'बहुव्रीहौ प्रकृत्ये'ति पूर्वपदप्रकृतिस्वरः । पूर्वपदं 'नः संख्यायाः' इत्याद्युदात्तम् । 'इदुदुपधस्य चाप्रत्ययस्ये'ति विसर्जनीयस्य षत्वम् । ईदृशो यः प्रजापतिस्तस्मै कस्मा इत्यादि सुबोधम् । हविषा हृदयाद्यात्मनेत्ययमत्र विशेषः ॥३॥

प्राणतो निमिषतः जगतः—'All that breathes, sleeps and moves,' referring to the whole living world as distinguished from the inanimate creation.

4

यस्य | इमे | हिमऽवन्तः | महिऽत्वा ।
यस्य | समुद्रम् | रसया | सह | आहुः ॥
यस्य | इमाः | प्रऽदिशः | यस्य | बाहू इति ।
कस्मै | देवाय | हविषा | विधेम ॥४॥

Through whose greatness these snow-clad (mountains exist), whose property men call the ocean with the rivers, whose are these quarters of space, whose arms are they,—let us offer worship with an oblation to the divine *KA*.—4.

सा. भा.।—हिमानि अस्मिन् सन्तीति हिमवान्। तेन बहुवचनान्तेन सर्वे पर्वता उपलक्ष्यन्ते। यथा छत्रिणो गच्छन्तीति। हिमवन्तः—हिमवदुपलक्षिता इमे दृश्यमानाः सर्वे पर्वता यस्य—प्रजापतेर्महित्वा महत्त्वं माहात्म्यमैश्वर्यमित्याहुः। तेन सृष्टत्वात्तद्रूपेणावस्थानाद्वा। तथा रसया। रसो जलं तद्वती रसा—नदी। अर्श आदित्वादच्। जातावेकवचनम्। रसाभिर्नदीभिः सह समुद्रम्। पूर्ववदेकवचनम्। सर्वान् समुद्रान् यस्य महाभाग्यमित्याहुः कथयन्ति सृष्टाभिज्ञाः। यस्य चेमाः प्रदिशः—प्राच्यारम्भा आग्नेय्याद्याः कोणदिश ईशान्याद्या वा। तथा बाहू। वचनव्यत्ययः। बाहवो भुजाः भुजवत् प्राधान्ययुक्ताः प्रदिशश्च यस्य स्वभूताः तस्मै कस्मा इत्यादि समानं पूर्वेण ॥४॥

हिमवन्तः—By this expression the Himâlayan ranges are evidently meant. The mention of the Himalayas here supplies us with one of the important geographical data of the Ṛ.V.

यस्येमाः प्रदिशो यस्य बाहू—*cf.* 'बाहवोऽस्य दिशः सर्वाः कुक्षिर्यापि महार्णवः,' etc., prayer to Viṣṇu by Dhaumya, Mbh.

5

येन । द्यौः । उग्रा । पृथिवी । च । दृळ्हा ।
येन । स्वरिति स्वः । स्तभितम् । येन । नाकः ॥
यः । अन्तरिक्षे । रजसः । विऽमानः ।
कस्मै । देवाय । हविषा । विधेम ॥५॥

By whom the sky was made profound and the earth solid, by whom heaven and the solar sphere were fixed, who was the maker of the water in the firmament,—let us offer worship with an oblation to the divine *KA*.—5.

सा. भा.।—येन—प्रजापतिना द्यौः—अन्तरिक्षम् उग्रा—उद्गूर्णा पृथिवी—भूमिश्च दृळ्हा येन स्थिरीकृता। स्वः—स्वर्गश्च येन स्तभितम्—स्तब्धं कृतम्। यथाधो न पतति तथा पर्यवस्थापितमित्यर्थः। 'प्रसितस्कभितस्तभिते'ति निपात्यते। तथा नाक आदित्यश्च येनान्तरिक्षे स्तभितः। यश्चान्तरिक्षे रजस उदकस्य विमानः—निर्माता तस्मै कस्मा इत्यादि गतम् ॥५॥

नाकः—The sun, see note on नाकस्य रोचने, etc., verse 6, Hymn No. 12.

6

यम् | क्रन्दसी इति | अवसा | तस्तभाने इति ।

अभि | ऐक्षेताम् | मनसा | रेजमाने इति ॥

यत्र | अधि | सूरः | उत्ऽइतः | विऽभाति ।

कस्मै | देवाय | हविषा | विधेम ॥६॥

Whom heaven and earth created or established by his fostering protection, and shining brightly, look upon with (regardful) mind, in whom the risen sun shines forth,—let us offer worship with an oblation to the divine *KA*.—6.

सा. भा. ।—क्रन्दितवान्—रोदितवाननयोः प्रजापतिरिति क्रन्दसी—द्यावापृथिव्यौ । श्रूयते हि—'यदरोदीत्तदनयो रोदस्त्वम्' ( तै॰ ब्रा॰ २.२.९.४. ) इति । ते अवसा—रक्षणेन हेतुना लोकस्य रक्षणार्थं तस्तभाने—प्रजापतिना सृष्टे लब्धस्थैर्ये सत्यौ यम्—प्रजापतिं मनसा—बुद्ध्या अभ्यैक्षेताम्—आवयोर्महत्त्वमनेनेत्यभ्यपश्येताम् । ईक्ष दर्शने । लघ्वादित्वादाद्युदात्तत्वम् । कीदृश्यौ द्यावापृथिव्यौ ? रेजमाने—राजमाने दीप्यमाने । आकारस्य व्यत्ययेनैत्वम् । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः । यद्वा लिटः कानच् । 'फणाञ्च सप्तानाम्' (पा॰ ६.४.१२५) इत्येत्वाभ्यासलोपौ । 'छन्दस्युभयथे'ति सार्वधातुकत्वाच्छप् । 'अभ्यस्तानामादि'रित्याद्युदात्तत्वम् । यत्राधि—यस्मिन्नाधारभूते प्रजापतौ सूरः—सूर्य उदितः—उदयं प्राप्तः सन् विभाति—प्रकाशते । उत्पूर्वादेतेः कर्मणि निष्ठा । 'गतिरनन्तर' इति गतेः प्रकृतिस्वरत्वम् । तस्मै कस्मा इत्यादि समानम् ॥६॥

7

आपः | ह | यत् | बृहतीः | विश्वम् | आयन् ।

गर्भम् | दधानाः | जनयन्तीः | अग्निम् ॥

ततः | देवानाम् | सम् | अवर्तत | असुः | एकः ।

कस्मै | देवाय | हविषा | विधेम ॥७॥

When the vast waters overspread the universe, containing the germ and giving birth to Agni, then was produced the one breath of the gods,—let us offer worship with an oblation to the divine *KA*.—7.

सा. भा. ।—बृहतीः—बृहत्यो महत्यः। 'जसि वा छन्दसी'ति पूर्वसवर्णदीर्घः। 'बृहन्महतोरुपसंख्यानमि'ति ङीप उदात्तत्वम्। अग्निम् उपलक्षणमेतत्। अग्न्युपलक्षितं सर्वं वियदादिभूतजातं जनयन्तीः—जनयन्त्यः। तदर्थं गर्भम्—हिरण्मयाण्डस्य गर्भभूतं प्रजापतिं दधानाः—धारयन्त्य आपो ह—आप एव विश्वमायन्—सर्वं जगद्व्याप्नुवन्। यत्—यस्मात् ततः तस्माद्धेतोर्देवानाम्—देवादीनां सर्वेषां प्राणिनाम् असुः—प्राणभूत एकः प्रजापतिः समवर्तत—समजायत। यद्वा, यत्—यं गर्भं दधाना आपो विश्वात्मनावस्थितास्ततो गर्भभूतात् प्रजापतेर्देवादीनां प्राणात्मको वायुरजायत। अथवा यत् लिङ्गवचनयोर्व्यत्ययः। उक्तलक्षणा या आपो विश्वमावृत्य स्थितास्ततः—ताभ्योऽद्भ्यः सकाशादेकः—अद्वितीयोऽसुः—प्राणात्मकः प्रजापतिः समवर्तत—निश्चक्राम। तस्मै कस्मा इत्यादि गतम् ॥७॥

For a similar idea, *cf.* Sat. Br. xi. 1. 6. 1. 'आपो ह वै इदमग्रे सलिलम् एवास।' The starting point is the primeval waters on which floated Hiraṇyagarbha, the cosmic golden egg, whence is produced the Spirit that desires and creates the universe.

गर्भम्—The germ of the world, *Brahman*. The birth of Hiraṇyagarbha, or Brahman, in and from the Mundane egg, as described in Manu i. 8-11. is here referred to; *cf.* Ch. Br. 5. 19; Ch. UP. 3. 19 1-4; Br. Ārn. Up. 5. 6. 1.

## 8

यः । चित् । आपः । महिना । परिऽअपश्यत् ।
दक्षम् । दधानाः । जनयन्तीः । यज्ञम् ॥
यः । देवेषु । अधि । देवः । एकः । आसीत् ।
कस्मै । देवाय । हविषा । विधेम ॥८॥

He who by his might beheld the waters all around containing the creative power and giving birth to sacrifice, he who among the gods was the one Supreme God,—let us offer worship with an oblation to the divine *KA*.—8.

सा. भा.।—यं यज्ञोपलक्षितं विकारजातं जनयन्तीः—उत्पादयन्तीस्तदर्थं दक्षम्—प्रपञ्चात्मना वर्धिष्णुं प्रजापतिमात्मनि दधानाः—धारयित्रीः। दधातेर्ह तौ शानच्। 'अभ्यस्तानामादि'-रित्याद्युदात्तत्वम्। ईदृशीरापः व्यत्ययेन प्रथमा। अपः प्रलयकालीना महिना—महिम्ना। छान्दसो मलोपः। स्वमाहात्म्येन यश्च प्रजापतिः पर्यपश्यत्—परितो दृष्टवान्। यश्च देवेष्वधि देवेषु मध्ये देवः—तेषामपीश्वरः सन् एकः—अद्वितीय आसीत्—भवति। अस्तेश्छान्दसो लङ्। 'अस्तिसिचोऽपृक्ते' (पा॰ ७.३.९६) इतीडागमः। तस्मै कस्मा इत्यादि गतम्॥८॥

आपः—*rfs. to* the waters in the beginning of the creation, *cf.* x. 129. 3. 'अप्रकेतं सलिलं सर्वमा इदम्'.

दक्षम्—The commentators explain दक्ष here as synonymous with Prajāpati, see Mahīdhara on the YV. xxvii. 26. Wilson renders the term by—'creative power'; Peterson—'strength'.

9

मा । नः । हिंसीत् । जनिता । यः । पृथिव्याः ।
यः । वा । दिवम् । सत्यऽधर्मा । जजान ॥
यः । च । अपः । चन्द्राः । बृहतीः । जजान ।
कस्मै । देवाय । हविषा । विधेम ॥८॥

May he do us no harm, who is the progenitor of the earth, or who the real support (of the world) begat the heaven, and who generated the vast and delighting waters,—let us offer worship with an oblation to the divine *KA*.—9.

सा. भा.।—स प्रजापतिः नः—अस्मान्मा हिंसीत्—मा बाधताम्। यः पृथिव्याः—भूमेर्जनिता—जनयिता स्रष्टा। 'जनिता मन्त्र' इति णिलोपो निपात्यते। 'उदात्तयणो हल्पूर्वादि'ति पृथिवीशब्दाद्विभक्तेरुदात्तत्वम्। यो वा—यश्च सत्यधर्मा। सत्यमवितथं धर्म—जगतो धारणं यस्य स तादृशः प्रजापतिर्दिवमन्तरिक्षोपलक्षितान् सर्वान् लोकान् जजान—जनयामास। जनी प्रादुर्भावे। णिचि वृद्धौ 'जनीजॄष्क्नसुरञ्ज' इति मित्त्वान्मितां ह्रस्व इति ह्रस्वत्वम्। ततो 'लिट्यमन्त्रे' इति निषेधादाम्प्रत्ययाभावे तिपो णलि वृद्धौ लितीति प्रत्ययात् पूर्वस्योदात्तत्वम्। यश्च बृहतीः—महतीः चन्द्राः—आह्लादिनीः अपः—उदकानि जजान—जनयामास। 'उडिदम्'इत्यादिना अप्शब्दादुत्तरस्य शस उदात्तत्वम्। तस्मै कस्मा इत्यादि गतम्॥९॥

The YV. (xii. 102) has प्रथमः instead of बृहतीः, 'who first begat the delightful (चन्द्राः—आह्लादिकाः) waters'. Mahīdhara explains अपः here as 'men', and cites the text:—'मनुष्या वा आपश्चन्द्राः'।

## 10

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव ।

यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥१०॥

No other than thou, Prajāpati, rulest over all created beings, may that object of our desires for which we sacrifice to thee be ours, may we be the possessors of riches.—10.

सा. भा.।—इळादधाख्य इष्ट्ययने प्राजापत्यस्य हविषः 'प्रजापत'इत्येषानुवाक्या। सूत्रितञ्च—'प्राजापत्य इळादधः प्रजापते न त्वदेतान्यन्यः (आ° २.१४) इति। केशनख-कीटादिभिर्दुष्टानि हवींष्यनयैवाप्सु' प्रक्षिपेत्। सूत्रितञ्च—'अपोऽभ्यवहरेयुः प्रजापते न त्वदेतान्यन्यः' (आ° ३.१०) इति। चौलादिकर्मस्वप्येषा होमार्था। सूत्रितञ्च—'तेषां पुरस्ताच्चतस्र आज्याहुतीर्जुहुयादग्न आयूंषि पवस' इति तिसृभिः, प्रजापते न त्वदेतान्यन्य इति च (आ° गृ° १.४) इति ॥

हे प्रजापते, त्वत्—त्वत्तोऽन्यः कश्चिदेतानि—इदानीं वर्तमानानि विश्वा—विश्वानि सर्वाणि। 'शेश्छन्दसि बहुलमि'ति शेर्लोपः। जातानि—प्रथमविकारभाञ्जि ता—तानि सर्वाणि भूतजातानि न परि बभूव—न परिगृह्णाति न व्याप्नोति। त्वमेवैतानि परिगृह्य स्रष्टुं शक्नोषीति भावः। परिपूर्वो भवतिः परिग्रहार्थः। वयञ्च यत्कामाः—यत् फलं कामयमानाः ते—तुभ्यं जुहुमः—हवींषि प्रयच्छामस्तत्फलं नः—अस्माकमस्तु—भवतु। तथा वयं च रयीणाम्—धनानां पतयः—ईश्वराः स्याम—भवेम। 'नामन्यतरस्यामि'ति नाम उदात्तत्वम् ॥१०॥

This verse occurs in YV. x. 20 and Nir. 10. 43. It is to be noted that all the verses of this hymn are in the YV., but are scattered here and there.

Mark that the Pada-pāṭha of this verse is the same as the Saṃ. pāṭha. This is one of the six verses, which, acc. to Kaegi, 'appear to have forced themselves into the RV. text only after the introduction of the Pada-pāṭha' —Kaegi, 'The Rigveda', note 79, p. 120.

## Hymn No. 28.

### DEVĪ-SŪKTA.

x. 125.

*Introductory Notes.*

Goddesses do not occupy a very high position in the Veda. The only important one is Uṣas. Goddesses like Pṛthvī, Rātrī, Śrī, are praised in one hymn each. The goddess Vāc has been celebrated in two hymns of the ṚV.: x. 71. and x. 125 (the present one). In this hymn Vāc (personified Speech) describes herself. 'She accompanies all the gods and supports Mitra-Varuṇa, Indra-Agni and the Aśvins'. ......'Her place is in the waters, the sea. She encompasses all beings'.

'All that has a voice in nature, the thunder of the storm, the rewaking of life at dawn, with songs of rejoicing over the new birth of the world are embodied in this Vāc.........' *Cosmology of the Ṛgveda*, p. 85.

See also Weber—*Indische Studien*, ix, pp. 473-80; M. Müller, *Vedanta Philosophy*, pp. 144-147; *Six Systems of Hindu Philosophy*, pp. 86-87, (where the hymn has been translated); Macdonell, *Ved. Myth.*, p. 186.

This hymn confirms the following statement of M. Müller:—

'There is a monotheism that precedes the polytheism of the Veda and even in the invocations of innumerable gods, the remembrance of a God, one and infinite, breaks through the mist.'

---

1

अहम् । रुद्रेभिः । वसुऽभिः । चरामि

अहम् । आदित्यैः । उत । विश्वऽदेवैः ॥

अहम् । मित्रावरुणा । उभा । बिभर्मि

अहम् । इन्द्राग्नी इति । अहम् । अश्विना । उभा ॥१॥

I proceed[1] with the Rudras, with the Vasus, with the Ādityas, and with the Viśvadevas; I support[2] both Mitra and Varuṇa, Agni and Indra, and the two Aśvins.—1.

सा. भा. ।—अहमित्यष्टर्चं तृतीयोदशं सूक्तम्। अम्भृणस्य महर्षेर्दुहिता वाङ्नाम्नी ब्रह्मविदुषी स्वात्मानमस्तौत्। अतः सर्षिः। सच्चित्सुखात्मकः सर्वगतः परमात्मा देवता। तेन ह्येषा तादात्म्यमनुभवन्ती सर्वजगद्रूपेण सर्वस्याधिष्ठानत्वेन चाहमेव सर्वं भवामीति स्वात्मानं स्तौति। द्वितीया जगती, शिष्टाः सप्त त्रिष्टुभः। तथा चानुक्रान्तम्—'अहमष्टौ वागाम्भृणी तुष्टावात्मानं द्वितीया जगती'ति। गतो विनियोगः।

अहं सूक्तस्य द्रष्ट्री वागाम्भृणी यद्ब्रह्म जगत्कारणं तद्रूपा भवन्ती रुद्रेभिः—रुद्रैरेकादशभिः। इत्थम्भावे तृतीया। तदात्मना चरामि। एवं वसुभिरित्यादौ तत्तदात्मना चरामीति योज्यम्। तथा मित्रावरुणा—मित्रञ्च वरुणञ्च। 'सुपां सुलुगि'ति द्वितीयाया आकारः। उभा—उभौ अहमेव ब्रह्मभूता बिभर्मि—धारयामि। मयि हि सर्वं जगच्छुक्तौ रजतमिवाध्यस्तं सत् दृश्यते। माया च जगदाकारेण विवर्तते। तादृश्या मायाया आधारत्वेनासङ्गस्यापि ब्रह्मण उक्तस्य सर्वस्योत्पत्तिः ॥१॥

2

अहम् । सोमम् । आहनसम् । बिभर्मि ।
अहम् । त्वष्टारम् । उत । पूषणम् । भगम् ॥
अहम् । दधामि । द्रविणम् । हविष्मते ।
सुप्रऽअव्ये । यजमानाय । सुन्वते ॥२॥

I support the foe-destroying (or roaring) Soma, Tvaṣṭṛ, Pūṣan and Bhaga; I bestow wealth upon the institutor of the rite, offering the oblation, deserving of careful protection, pouring forth the libation (of Soma-juice).—2.

सा. भा. ।—आहनसम्—आहन्तव्यमभिषोतव्यं सोमम्। यद्वा, शत्रूणामाहन्तारं दिवि वर्तमानं सोममहमेव बिभर्मि। तथा त्वष्टारम् उत—अपि च पूषणं भगञ्चाहमेव बिभर्मि। तथा हविष्मते—हविर्भिर्युक्ताय सुप्राव्ये—शोभनं हविर्देवानां प्रापयित्रे तर्पयित्रे। अवतेस्तर्पणार्थात् 'अवितृस्तृतन्त्रिभ्य ईः' इतीकारप्रत्ययः। चतुर्थ्येकवचने 'यण्युदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्ये'ति सुपः स्वरितत्वम्। सुन्वते—सोमाभिषवं कुर्वते। 'शतुरनुम' इति चतुर्थ्या उदात्तत्वम्।

1 'Walk with.' 2 'Sustain'—Peterson.

ईदृशाय यजमानाय द्रविणम्—धनं यागफलरूपमहमेव धारयामि। एतच्च ब्रह्मणः फलदातृत्वं 'फलमत उपपत्तेः' (उ॰ मीमा॰ ३.२.३८) इत्यधिकरणे भगवता भाष्यकारेण समर्थितम् ॥२॥

आहनसम्—r/s. to the stream of soma-juice roaring during its passage through the strainer, *cf.* 'ये ते मदा आहनसः', ix. 75. 5. (Sāy. comments 'आहनसः—आहननवन्तो वचनवन्त इति यास्कः,' Nir. 4. 15); or it means—'(the Soma) from which juice is to be expressed' (आधोतव्य), the process consisting in the beating on the Soma shoots with stones (grāvans); see Introd. notes on Soma Pavamāna (p. 248. n.). For the latter sense, *cf.* Sāy.'s comm. on ii. 13. 1, 'आहनाः—आहन्तव्योऽभिषोतव्यो भवति'

सुप्राव्ये—Roth explains it to mean—'*very attentive,—zealous*', and quotes i. 60. 1, where the word occurs, ('सुष्ठु प्रकर्षेण अवति रक्षती'ति सुप्रावी:—Sāy.); also i. 83. 1 whereon Sāy. has the note:—'सुप्रावीः—सुष्ठु सुरक्षितः। अवितृ-स्तृतन्त्रिभ्य ईरित्यवतेरीकार-प्रत्ययः।' It also occurs in ii. 26. 1; iv. 25. 5, 6.

3

अहम् । राष्ट्री । सम्ऽगमनी । वसूनाम् ।
चिकितुषी । प्रथमा । यज्ञियानाम् ॥
ताम् । मा । देवाः । वि । अदधुः । पुरुऽत्रा ।
भूरिऽस्थात्राम् । भूरि । आऽवेशयन्तीम् ॥३॥

I am the sovereign queen, the collectress of treasures, cognisant (of the Supreme Being), the foremost of those worthy of sacrifice;[1] as such the gods have put me in many places, abiding in manifold conditions, entering into numerous (forms).—3.

सा. भा.।—अहं राष्ट्री। ईश्वर-नामैतत्। सर्वस्य जगत ईश्वरी। तथा वसूनाम्—धनानां सङ्गमनी—सङ्गमयित्री उपासकानां प्रापयित्री। चिकितुषी—यत् साक्षात् कर्तव्यं परं ब्रह्म तज्ज्ञातवती स्वात्मतया साक्षात्कृतवती। अतएव यज्ञियानाम्—यज्ञार्हाणां प्रथमा—मुख्या। या एवंगुणविशिष्टाहं तां मां भूरिस्थात्राम्—बहुभावेन प्रपञ्चात्मनावतिष्ठमानाम्। भूरि—भूरीणि बहूनि भूतजातानि आवेशयन्तीम्—जीवभावेनात्मानं प्रवेशयन्तीमीदृशीं मां पुरुत्रा—बहुषु देशेषु व्यदधुः—देवा विदधति कुर्वन्ति। उक्तप्रकारेण वैश्वरूप्येणावस्थानात्। यद्यत् कुर्वन्ति तत् सर्वं मामेव कुर्वन्तीत्यर्थः ॥३॥

सङ्गमनी—*cf.* 'सङ्गमनं जनानाम्,' x. 14.1 (Hymn No. 24).

[1] 'The chief of all the objects of worship'—Wilson.

4

मया । सः । अन्नम् । अत्ति । यः । विऽपश्यति ।
यः । प्राणिति । यः । ईम् । शृणोति । उक्तम् ॥
अमन्तवः । माम् । ते । उप । क्षियन्ति ।
श्रुधि । श्रुत । श्रद्धिऽवम् । ते । वदामि ॥४॥

He who eats food does so through me; he who sees, who breathes, who hears what is spoken, does the same through me; those, who mind me not,[1] perish; hear thou who hast hearing, I tell thee that, which is deserving of belief.[2]—4.

सा. भा. ।—योऽन्नमत्ति स भोक्तृशक्तिरूपया मयैवान्नमत्ति । यश्च विपश्यति—आलोकयतीत्यर्थः । यश्च प्राणिति—श्वासोच्छ्वासादिव्यापारं करोति सोऽपि मयैव । यश्चोक्तं शृणोति । श्रु श्रवणे । 'श्रुवः शृ चे'ति श्रुधातोः शृ-भावः । य ईदृशीमन्तर्यामिरूपेण स्थितां मां न जानन्ति तेऽमन्तवः—अमन्यमाना अजानन्त उपक्षियन्ति—उपक्षीणाः संसारेण हीना भवन्ति । मनेरौणादिकस्तु-प्रत्ययः । नञ्समासे व्यत्ययेनान्तोदात्तत्वम् । यद्वा, भावे तु-प्रत्ययः । ततो बहुव्रीहौ 'नञ्सुभ्यामि'त्युत्तरपदान्तोदात्तत्वम् । माम् अमन्तवः—मद्विषयज्ञानरहिता इत्यर्थः । हे श्रुत—विश्रुत सखे, श्रुधि—मया वक्ष्यमाणं शृणु । छान्दसो विकरणस्य लुक् । 'श्रुशृणुपॄकृवृभ्य' इति हेर्धिभावः । किं तच्छ्रोतव्यम्? श्रद्धिवम् । श्रद्धिः—श्रद्धा तया युक्तम् । श्रद्धायत्नेन लभ्यमित्यर्थः । 'श्रदन्तरोरुपसर्गवद्वृत्तिरिष्यते' (पा° १. ४. ५७. वा° २) इति श्रच्छब्दस्योपसर्गवद्वर्तमानत्वा'दुपसर्गे घोः कि'रिति किप्रत्ययः । मत्वर्थीयो वः । ईदृशं ब्रह्मात्मकं वस्तु ते—तुभ्यं वदामि—उपदिशामि ॥४॥

अमन्तवः...उपक्षियन्ति—The unbelievers are ever doomed; *cf.* 'अमन्यमानाञ्छर्वा जघान', v. 10, Hymn No. 3.

श्रुत—Roth, Grassmann and Ludwig take this, against Sāy., as an imp. 2. pl.

1 'Who are ignorant of me.'—Wilson.

2 'Listen one and all, this is a true thing I say.'—Peterson.

5

अहम् । एव । स्वयम् । इदम् । वदामि ।
जुष्टम् । देवेभिः । उत । मानुषेभिः ॥
यम् । कामये । तम्ऽतम् । उग्रम् । कृणोमि ।
तम् । ब्रह्माणम् । तम् । ऋषिम् । तम् । सुऽमेधाम् ॥५॥

Verily I of myself speak what is agreeable to gods and men;[1] whomsoever I will, I render him formidable, I make him a *Brāhmaṇa*, a *Ṛṣi* or a sage.[2]—5.

सा. भा.।—अहं स्वयमेवेदम्—वस्तु ब्रह्मात्मकं वदामि—उपदिशामि। देवेभिः—देवैरिन्द्रादिभिरपि जुष्टम्—सेवितम्। उत—अपि च मानुषेभिः—मनुष्यैरपि जुष्टम्। ईदृग्वस्त्वात्मिकाहं कामये—यं पुरुषं रक्षितुमहं वाञ्छामि तं तम्—पुरुषमुग्रं कृणोमि—सर्वेभ्योऽधिकं करोमि। तमेव ब्रह्माणम्—स्रष्टारं करोमि। तमेव ऋषिम्—अतीन्द्रियार्थदर्शिनं करोमि। तमेव सुमेधाम्—शोभनप्रज्ञं करोमि ॥५॥

6

अहम् । रुद्राय । धनुः । आ । तनोमि ।
ब्रह्मऽद्विषे । शरवे । हन्तवै । ऊं इति ॥
अहम् । जनाय । सऽमदम् । कृणोमि ।
अहम् । द्यावापृथिवी इति । आ । विवेश ॥६॥

I bend the bow of Rudra to slay the destructive enemy of the *Brāhmaṇas*, I carry on war with (hostile) men, I pervade heaven and earth.—6.

सा. भा.।—पुरा त्रिपुरविजयसमये रुद्राय—रुद्रस्य। षष्ठ्यर्थे चतुर्थी। महादेवस्य धनुः—चापम् अहम् आ तनोमि—ज्ययाततं करोमि। किमर्थम्? ब्रह्मद्विषे—ब्राह्मणानां द्वेष्टारं शरवे—शरुं हिंसकं त्रिपुरनिवासिनमसुरं हन्तवै—हन्तुं हिंसितुम्। हन्तेस्तुमर्थे से-सेनेति तवै-प्रत्ययः।

1 'Which is approved by both gods and men.'—Wilson.

2 'A prophet and a wise man.'—Peterson.

3 '......for Rudra that his arrow may smite down all that hate God.'—Peterson.

'अन्तश्च तवै युगपदि'त्याद्यन्तयोर्युगपदुदात्तत्वम्। शॄ हिंसायामित्यस्मा'च्छॄस्वृस्निही'-त्यादिना उ-प्रत्ययः। 'क्रियाग्रहणं कर्तव्यमि'ति कर्मणः सम्प्रदानत्वाच्चतुर्थी। उ-शब्दः पूरकः। अहमेव समदम्। समानं माद्यन्त्यस्मिन्निति समत्—संग्रामः। स्तोतृजनार्थं शत्रुभिः सह संग्राममहमेव कृणोमि—करोमि। तथा द्यावापृथिवी—दिवञ्च पृथिवीञ्च अन्तर्यामितया अहमेव आविवेश—प्रविष्टवती ॥६॥

शरवे—Sāy. explains the term here to mean the destructive enemies, the demons. Elsewhere शरु means a weapon, Sāy. means by it वज्र, in i. 100. 18; ii. 12. 10. (Hymn No. 3).

हन्तवे—Ved. Inf. with *aff.* तवे.

7

अहम् | सुवे | पितरम् | अस्य | मूर्धन् ।

मम | योनिः | अप्ऽसु | अन्तरिति | समुद्रे ॥

ततः | वि | तिष्ठे | भुवना | अनु | विश्वा ॥

उत | अमूम् | द्याम् | वर्ष्मणा | उप | स्पृशामि ॥७॥

I bring forth the paternal (heaven) upon the brow of this (Supreme Being), my birthplace is in the midst of the waters; from thence I spread through all beings, and touch this heaven with my body.—7.

सा. भा.।—'द्यौः पिते'ति श्रुतेः पिता द्यौः। पितरम्—दिवम् अहं सुवे—प्रसुवे जनयामि। 'आत्मनः आकाशः सम्भूत' इति श्रुतेः। कुत्रेति तदाह।—अस्य परमात्मनो मूर्धन्—मूर्धन्युपरि। कारणभूते तस्मिन् हि वियदादिकार्यजातं सर्वं वर्तते तन्तुषु पट इव। मम च योनिः—कारणं समुद्रे। समुद्रवन्त्यस्माद्भूतजातानीति समुद्रः परमात्मा। तस्मिन्नप्सु—व्यापनशीलासु धीवृत्तिषु अन्तः—मध्ये यद्ब्रह्मचैतन्यं तन्मम कारणमित्यर्थः। यत ईदृग्भूताहमस्मि। ततो हेतोर्विश्वा—विश्वानि सर्वाणि भुवनानि भूतजातान्यनु—प्रविश्य वि तिष्ठे—विविधं व्याप्य तिष्ठामि। 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम्। उत—अपि च अमूं द्याम्—विप्रकृष्टदेशेऽवस्थितं स्वर्गलोकम् उपलक्षणमेतत्। एतदुपलक्षितं कृत्स्नं विकारजातं वर्ष्मणा—कारणभूतेन मायात्मकेन मदीयेन देहेन उप स्पृशामि। यद्वा, अस्य भूलोकस्य मूर्धन्—मूर्धन्युपरि अहं पितरमाकाशं सुवे। समुद्रे—जलधौ अप्सु उदकेष्वन्तः—मध्ये मम योनिः—कारणभूतोऽम्भृणाख्य ऋषिर्वर्तते। यद्वा, समुद्रे—अन्तरिक्षेऽप्सु—अम्मयेषु देवशरीरेषु मम कारणभूतं ब्रह्मचैतन्यं वर्तते। ततोऽहं कारणात्मिका सती सर्वाणि भुवनानि व्याप्नोमि। अन्यत् समानम् ॥७॥

पितरम्—'Heaven or Sky, produced from *Vāc* identified with Paramātman, the Supreme and Universal Soul'.

वर्ष्मन्—This word occurs in different passages of the RV. in different senses. In iii. 5.9 Sāy. gives as its syn. रूप (form); in iii. 8.3 the word is explained as उत्कृष्ट देश (excellent spot); in iv. 54.4, as उरुत्व (vast extent or magnitude); in vi. 47.4, as संहतत्व, दृढत्व (compactness); see also viii. 32.3, x. 63.4, etc. In the present verse it is explained to mean देह (body). Grassmann thinks—the word is derived fr. the same stem as वर्षीयस्, वर्षिष्ठ and means—(1) height, highest space; (2) the crown (of the head).

8

अहम् | एव | वातःऽइव | प्र | वामि ।

आऽरभमाणा | भुवनानि | विश्वा ॥

परः | दिवा | परः | एना | पृथिव्या ।

एतावती | महिना | सम् | बभूव ॥८॥

I breathe forth like the wind,[1] giving form to all created worlds; beyond the heaven, beyond this earth (am I), so vast am I in greatness.[2]—8.

सा. भा. ।—विश्वा—विश्वानि सर्वाणि भुवनानि भूतजातानि कार्याण्यारभमाणा कारणरूपेणोत्पादयन्त्यहमेव परेणानधिष्ठिता स्वयमेव प्रवामि—प्रवर्ते वात इव । यथा वातः परेणाप्रेरितः सन् स्वेच्छयैव प्रवाति तद्वत् । उक्तं सर्वं निगमयति । परो दिवा । पर इति सकारान्तं परस्तादित्यर्थे वर्तते यथाध इत्यधस्तादित्यर्थे । तद्योगे च तृतीया सर्वत्र दृश्यते । दिव आकाशस्य परस्तात् । एना पृथिव्या । 'द्वितीयाटौस्स्वेनः' इतीदम एनादेशः । अस्याः पृथिव्याः परः—परस्तात् । द्यावापृथिव्योरुपादानमुपलक्षणम् । एतदुपलक्षितात् सर्वाद्विकारजातात् परस्ताद्वर्तमानासङ्गोदासीनकूटस्थब्रह्मचैतन्यरूपाहं महिना—महिम्ना एतावती संबभूव । एतच्छब्देनोक्तं सर्वं परामृश्यते । एतत् परिमाणमस्याः । 'यत्तदेतेभ्यः परिमाणे' इति वतुप् । 'आ सर्वनाम्नः' इत्यात्वम् । सर्वजगदात्मनाहं सम्भूतास्मि । महच्छब्दादिमनिचि 'टेरि'ति टिलोपः । ततः तृतीयायामुदात्तनिवृत्तिस्वरेण तस्या उदात्तत्वम् । छान्दसो मलोपः ॥८॥

एना—See note on the word in v. 2, No. 2. महिना—see v. 7, No. 17.

---

[1] 'I blow as the wind blows.'—Peterson.

[2] 'Past heaven, past earth: such is my might.'—Peterson.

## Hymn No. 29.

### ON DICE.

x. 34.

*Introductory Notes.*

There are a few didactic secular hymns in the Ṛgveda of which this is one. It is a striking poem, being a monologue in which a gambler 'lays before us the sad results of his own bitter experience, describes with great vividness the seductions and miseries of gambling, which, we see, were as acutely felt by their victims in those early ages as they are in these later times'.

Muir observes, 'That the passion for gambling prevailed very extensively at the time when the hymns of the Ṛig- and Atharva-Vedas were composed, is clear from various other allusions to the practice which we find there. Thus in vii. 86. 6 dice are mentioned along with wine, anger, thoughtlessness, etc., as causes of sin. AV. vii. 50. 1,-109. 1; vi. 118. 1, iv. 38. 1—prove the same point'. —Muir, OST. V, p. 425.

---

1

प्रावेपाः | मा | बृहतः | मादयन्ति ।
प्रवातेऽजाः | इरिणे | वर्वृतानाः ॥
सोमस्यऽइव | मौजऽवतस्य | भक्षः ।
विऽभीदकः | जागृविः | मह्यम् | अच्छान् ॥१॥

The large rattling dice exhilarate me as torrents borne on a precipice flowing in a desert; the exciting dice animate me as the taste of the Soma of the Mūjavat (delights the gods).—1.

सा. भा.।—प्रावेपा इति चतुर्दशर्चं पञ्चमं सूक्तमैलूषस्यार्षं मूजवतः पुत्रस्याक्षाख्यस्य वा। सप्तमी जगती शिष्टास्त्रयोदश त्रिष्टुभः। अत्र द्वादश्यक्षान् स्तौति नवम्याद्या च सप्तमी। अतस्तास्तद्देवत्याः। त्रयोदशी कृषिं स्तौति। अतस्तस्याः सा देवता। एवं पञ्च गताः। शिष्टाभिर्नवभिः कितवोऽक्षाश्च निन्द्यन्ते। अतस्ता अपि तद्देवत्याः। तथा चानुक्रान्तम्—'प्रावेपाः पञ्चूना मौजवान्वाक्षोऽक्षकृषि-प्रशंसा चाक्षकितव-निन्दा च सप्तमी जगती'ति। गतो विनियोगः॥

बृहतः—महतो विभीदकस्य फलत्वेन सम्बन्धिनः प्रवातेजाः-प्रवणे देशे जाता इरिणे—आस्कारे वर्वृतानाः—प्रवर्तमानाः प्रावेपाः—प्रवेपिणः कम्पनशीला अक्षा मा—मां मादयन्ति—हर्षयन्ति। किञ्च, जागृविः—जय-पराजययोर्हर्षशोकाभ्यां कितवानां जागरणस्य कर्ता विभीदकः—विभीदकविकारोऽक्षो मह्यम्—माम् अच्छान्—अचच्छदत् अत्यर्थं मादयति। अत्र दृष्टान्तः—सोमस्येव—यथा सोमस्य मौजवतस्य—मूजवति पर्वते जातो मौजवतः तस्य। तत्र ह्युत्तमः सोमो जायते। भक्षः—पानं यजमानान्देवांश्च मादयति तद्वदित्यर्थः। तथा च यास्कः—'प्रवेपिणो मा महतो विभीदकस्य फलानि मादयन्ति। प्रवातेजाः—प्रवणेजा इरिणे वर्तमाना इरिणं निर्ऋण-मृणातेरपार्णं भवत्यपरता अस्मादोषधय इति वा। सोमस्येव मौजवतस्य भक्षो मौजवतो मूजवति जातो मूजवान् पर्वतो मुञ्जवान्　*　*　*　*　विभीदको विभेदनात्। जागृविर्जागरणात् मह्यमचच्छदत्' (नि° ९.८.) इति॥१॥

सोमस्येव मौजवतस्य—'Soma is described as Maujavata, coming from the Mujavants (a class of people), or, as Yāska takes it 'from the Mount Mūjavat'. (*Cf.* Nir. 9. 8, 'मौजवतो मूजवति जातः मूजवान् पर्वतः'). Yāska suggests that Mūjavat is equivalent to Muñjavat, which actually occurs in the epic (Mahābhārata, x. 785), as the name of a mountain in the Himālaya.'

विभीदकः—Also called विभीतक—(बहेड़ा इति भाषा, *Terminalia bellerica*).

2

न | मा | मिमेथ | न | जिहीळे | एषा।
　　शिवा | सखिऽभ्यः | उत | मह्यम् | आसीत्॥
अक्षस्य | अहम् | एकऽपरस्य | हेतोः।
　　अनुऽव्रताम् | अप | जायाम् | अरोधम्॥२॥

This (my wife) has not been angry (with me), nor was she overcome with shame. Kind was she to me and to my friends; yet for the sake of one or other die, I have deserted this affectionate spouse.—2

सा. भा. ।—एषा—अस्मदीया जाया मा—मां कितवं न मिमेथ—न च चुक्रोध न जिहीळे—न च लज्जितवती। सखिभ्यः अस्मदीयेभ्यः कितवेभ्यः शिवा—सुखकरी आसीत्—अभूत्। उत—अपि च मह्यं शिवासीत्। इत्थमनुव्रताम्—अनुकूलां जायाम् एकपरस्य—एकः परः प्रधानं यस्य तस्याक्षस्य हेतोः कारणादहमपारोधम्—परित्यक्तवानस्मीत्यर्थः ॥२॥

एषा—Refers to the gamester's own wife.

एकपरस्य—'Partial'—Muir; 'whose single point is final'—Griffith; '*exceeding by one*', alluding to an unlucky throw (called *Kali*) in which when the number of dice thrown is divided by four, one remains over (while in the best throw, the *Kṛta*, nothing remains over).

3

द्वेष्टि । श्वश्रूः । अप । जाया । रुणद्धि ।
न । नाथितः । विन्दते । मर्डितारम् ॥
अश्वस्येव । जरतः । वस्न्यस्य ।
न । अहम् । विन्दामि । कितवस्य । भोगम् ॥३॥

My mother-in-law reviles me, my wife opposes me ; the beggar meets no compassionate (benefactor); I do not realise the enjoyment of gamester any more than that of a valuable horse grown old.—3.

सा. भा. ।—श्वश्रूः—जायाया माता गृहगतं कितवं द्वेष्टि—निन्दतीत्यर्थः। किञ्च, जाया—भार्या अपरुणद्धि—निरुणद्धि। अपि च नाथितः—याचमानः कितवो धनं मर्डितारम्—धनदानेन सुखयितारं न विन्दते—न लभते। इत्थं बुद्ध्या विमृशन्नहं जरतः—वृद्धस्य वस्नम्—मूल्यं तदर्हस्याश्वस्येव कितवस्य भोगं न विन्दामि—न लभे ॥३॥

वस्न्यस्य—'That which is for sale', no longer fit for use, worthless. The word occurs only here in the ṚV. *Cf.* 'वस्न' meaning 'price,' iv. 24. 9. Muir renders the pāda 3 by—'as wretched as a worn-out hack.'

4

अन्ये । जायाम् । परि । मृशन्ति । अस्य ।
यस्य । अगृधत् । वेदने । वाजी । अक्षः ॥
पिता । माता । भ्रातरः । एनम् । आहुः ।
न । जानीमः । नयत । बद्धम् । एतम् ॥४॥

Others touch the wife of him whose wealth the potent dice covet; his mother, father, brother say, 'We know him not, take him away bound (wherever you will).'—4.

सा. भा. ।—यस्य—कितवस्य वेदने—धने वाजी—बलवान् अक्षो देवोऽगृधत्—अभिकाङ्क्षां करोति तस्यास्य—कितवस्य जायाम्—भार्याम् अन्ये प्रतिकितवाः परिमृशन्ति—वस्त्रकेशाद्याकर्षणेन संस्पृशन्ति । किञ्च, पिता जननी च भ्रातरः—सहोदराश्चैनम्—कितवमाहुः—वदन्ति—'न वयमस्मदीयमेनं जानीमः, रज्ज्वा बद्धमेतं कितवं हे कितवाः, यूयं नयत—यथेष्टदेशं प्रापयते'ति ॥४॥

5

यत् । आऽदीध्ये । न । दविषाणि । एभिः ।
परायत्ऽभ्यः । अव । हीये । सखिऽभ्यः ॥
निऽउप्ताः । च । बभ्रवः । वाचम् । अक्रत ।
एमि । इत् । एषाम् । निःऽकृतम् । जारिणीऽइव ॥५॥

When I reflect (then I say), 'I will play no more with them.' I pay attention to my friends who desert (me); and the tawny dice rattle as they are thrown; I hasten to their accustomed place as a harlot (to an assignation).—5.

सा. भा. ।—यत् यदाहम् आदीध्ये—ध्यायामि तदानीमेभिः—अक्षैर्न दविषाणि—न दूषये न परितपामि। यद्वा, न दविषाणि—न देविष्यामीत्यर्थः । परायद्भ्यः—स्वयमेव परागच्छद्भ्यः सखिभ्यः—सखिभूतेभ्यः कितवेभ्योऽव हीये—अवहितो भवामि—नाहं प्रथममक्षान्विसृजामीति । किञ्च बभ्रवः—बभ्रुवर्णा अक्षा न्युप्ताः—कितवैरवक्षिप्ताः सन्तो वाचमक्रत—शब्दं कुर्वन्ति । तदा संकल्पं परित्यज्याक्षव्यसनेनाभिभूयमानोऽहमेषाम्—अक्षाणां निष्कृतम्—स्थानं जारिणीव—यथा कामव्यसनेनाभिभूयमाना स्वैरिणी संकेतस्थानं याति तद्वदेमि इत्—गच्छाम्येव ॥५॥

दविषाणि—Either from √ दु or from दिव्, *to play*, irregularly formed. The last pāda is quoted in Nir. 12. 7.

6

सभाम् । एति । कितवः । पृच्छमानः ।
जेष्यामि । इति । तन्वा । शूशुजानः ॥
अक्षासः । अस्य । वि । तिरन्ति । कामम् ।
प्रतिऽदीव्ने । दधतः । आ । कृतानि ॥६॥

The gamester goes to the gaming table, radiant in person ; and asking himself, 'shall I win?' The dice increase his passion for play as he practises the arts of (gambling) with his adversary.—6.

सा. भा.।—तन्वा—शरीरेण शूशुजानः—शोशुचानो दीप्यमानः कितवः कोऽत्रास्ति धनिकस्तं जेष्यामीति पृच्छमानः—पृच्छन् सभां कितवसम्बन्धिनीमेति—गच्छति। तत्र प्रतिदीव्ने—प्रतिदेविले कितवाय कृतानि—देवनोपयुक्तानि कर्माणि आ दधतः—जयार्थमाभिमुख्येन मर्यादया वा दधतोऽस्य—कितवस्य कामम्—इच्छाम् अक्षासः—अक्षा वितरन्ति—वर्धयन्ति ॥६॥

शूशुजानः—Participle from √ शूज्, *to be puffed up*, or, *to be insolent*, occurring here and in x. 27. 2. (*Vide* M. Williams, S. E. Dict., p. 1081.)

7

अक्षास॑: । इत् । अ॒ङ्कुशिन॑: । नि॒ऽतो॒दिन॑: ।
नि॒ऽकृत्वा॑न॒: । तप॑ना॒: । ता॒प॒यि॒ष्णव॑: ॥
कु॒मा॒रऽदे॑ष्णा॒ । जय॑त॒: । पु॒न॒:ऽहन॑: ।
मध्वा॑ । सम्ऽपृ॑क्ता॒: । कि॒त॒वस्य॑ । ब॒र्हणा॑ ॥७॥

Dice verily are armed with hooks, with goads, pricking, paining, and torturing (the gamester); to the winning (player) they are the givers of sons, they are tipped with honey ; slaying him in return by taking the gambler's (all).—7.

सा. भा.।—अक्षास इत्—अक्षा एव अङ्कुशिनः—अङ्कुशवन्तो नितोदिनः—नितोदितवतश्च पुरुषस्य कृषौ प्रवर्तमानस्य निकृत्वानः—पराजये निकर्तनशीलाश्छेत्तारो वा। तपनाः—पराजये कितवस्य सन्तापकास्तापयिष्णवः—सर्वस्वहारकत्वेन कुटुम्बस्य सन्तापनशीलाश्च भवन्ति। किञ्च, जयतः कितवस्य कुमारदेष्णाः—धनदानेन धन्यतां लम्भयन्तः कुमाराणां दातारो भवन्ति। अपि च मध्वा—मधुना सम्पृक्ताः प्रतिकितवेन बर्हणा—परिवृढेन सर्वस्व-हरणेन कितवस्य पुनर्हन्तारो भवन्ति ॥७॥

कुमारदेष्णाः—*Lit.* givers of offspring. The dice are instrumental in procuring wealth to the winner, who in consequence becoming rich marries and gets children. Muir takes it to mean 'givers of transient gifts'; Mon. Williams—'Givers of perishable gifts'; Macdonell—'Giving gifts and then taking them back like children'.

8

त्रिऽपञ्चाशः । क्रीळति । व्रातः । एषाम् ।
देवःऽइव । सविता । सत्यऽधर्मा ॥
उग्रस्य । चित् । मन्यवे । न । नमन्ते ।
राजा । चित् । एभ्यः । नमः । इत् । कृणोति ॥८॥

The aggregate fifty-three of them are played as the divine truth-observant Savitṛ (travels): the dice bow not before the wrath of any, however violent; even a king pays them homage.—8.

सा. भा. ।—एषाम्—अक्षाणां त्रिपञ्चाशः—त्र्यधिकपञ्चाशत्संख्याको व्रातः—सङ्घः क्रीळति—आस्फारे विहरति । अक्षिकाः प्रायेण तावद्भिरक्षैर्दीव्यन्ति हि । तत्र दृष्टान्तः—सत्यधर्मा सविता—सर्वस्य जगतः प्रेरकः सूर्यो देव इव । यथा सविता देवो जगति विहरति तद्वदक्षाणां सङ्घ आस्फारे विहरतीत्यर्थः । किञ्च, उग्रस्य चित्—क्रूरस्यापि मन्यवे—क्रोधाय एतेऽक्षा न नमन्ते—न प्रह्वीभवन्ति न वशे वर्तन्ते तं नमयन्तीत्यर्थः । राजा चित् जगत ईश्वरोऽपि एभ्यो नम इत्—नमस्कारमेव देवनवेळायां कृणोति नावज्ञां करोतीत्यर्थः ॥८॥

9

नीचा । वर्तन्ते । उपरि । स्फुरन्ति ।
अहस्तासः । हस्तऽवन्तम् । सहन्ते ॥
दिव्याः । अङ्गाराः । इरिणे । निऽउप्ताः ।
शीताः । सन्तः । हृदयम् । निः । दहन्ति ॥९॥

Now they abide below, now they palpitate on high; handless, they overpower him who has hands; cast upon dice-board like live-coals from the sky, even though cold, they burn the heart.—9.

सा. भा. ।—अपि चैतेऽक्षा नीचा—नीचीनस्थले वर्तन्ते । तथाप्युपरि—पराजयाद्भीतानां द्यूतकराणां कितवानां हृदयस्योपरि स्फुरन्ति । अहस्तासः—हस्तरहिता अप्यक्षा हस्तवन्तं द्यूतकरं कितवं सहन्ते—पराजयकरणेनाभिभवन्ति । दिव्याः दिवि भवा अपकृता अङ्गाराः—अङ्गारसदृशाः अक्षा इरिणे—इन्धनरहित आस्फारे न्युप्ताः शीताः—शीतस्पर्शाः सन्तोऽपि हृदयम्—कितवानामन्तःकरणं निर्दहन्ति—पराजयजनितसन्तापेन भस्मीकुर्वन्ति ॥९॥

10

जाया । तप्यते । कितवस्य । हीना ।
माता । पुत्रस्य । चरतः । क्व । स्वित् ॥
ऋणऽवा । बिभ्यत् । धनम् । इच्छमानः ।
अन्येषाम् । अस्तम् । उप । नक्तम् । एति ॥१०॥

The deserted wife of the gamester is afflicted ; the mother (grieves) for son wandering wherever he likes ; involved in debt, ever in fear, anxious for wealth, (the gambler) goes forth by night to the dwellings of others (as a thief).—10.

सा. भा. ।—क्व स्वित्—क्वापि चरतः—निर्वेदाद्गच्छतः कितवस्य जाया—भार्या हीना—परित्यक्ता सती तप्यते—वियोगजसन्तापेन सन्तप्ता भवति। माता—जनन्यपि पुत्रस्य क्वापि चरतः कितवस्य सम्बन्धाद्धीना तप्यते पुत्रशोकेन सन्तप्ता भवति। ऋणवा—अक्षपराजयादृणवान् कितवः सर्वतो बिभ्यत् धनं स्तेयजनितमिच्छमानः कामयमानोऽन्येषां ब्राह्मणादीनामस्तम् गृहम्। 'अस्तं पस्त्यमि'ति गृहनामसु पाठात्। नक्तम्—रात्रावुपैति—चौर्यार्थमुपगच्छति ॥१०॥

11

स्त्रियम् । दृष्ट्वाय । कितवम् । तताप ।
अन्येषाम् । जायाम् । सुऽकृतम् । च । योनिम् ॥
पूर्वाह्णे । अश्वान् । युयुजे । हि । बभ्रून् ।
सः । अग्नेः । अन्ते । वृषलः । पपाद ॥११॥

The gamester, having observed the happy wife and well-ordered home of others, burns within ; yet in forenoon he yokes tawny steeds, and at night (as) a menial or a degraded wretch lies down (stranded) by the fire.—11.

सा. भा. ।—कितवम् कितवः। विभक्तिव्यत्ययः। अन्येषाम्—स्वव्यतिरिक्तानां पुरुषाणां जायाम्—जायाभूताम् स्त्रियं नारीं सुखेन वर्तमानां सुकृतम्—सुष्ठु कृतं सुसंस्कृतं योनिम्—गृहञ्च दृष्ट्वाय—दृष्ट्वा मम जाया दुःखिता गृहञ्चासंस्कृतमिति ज्ञात्वा तताप—तप्यते। पुनः पूर्वाह्णे—

प्रातःकाले बभ्रून्—बभ्रुवर्णानश्वान्—व्यापकानश्वान् युयुजे—युनक्ति। पुनश्च वृषलः—वृषलकर्मा स कितवो रात्रावग्नेरन्ते—समीपे पपाद—शीतार्त्तः सन् शेते ॥११॥

12

यः । वः । सेनाऽनीः । महतः । गणस्य ।
राजा । व्रातस्य । प्रथमः । बभूव ॥
तस्मै । कृणोमि । न । धना । रुणध्मि ।
दश । अहम् । प्राचीः । तत् । ऋतम् । वदामि ॥१२॥

Dice, I offer salutation to him who has been the general of your great army, the chief lord of your host ; I do not provide him with wealth ; I stretch forth my ten (fingers) towards the east (in reverence); that (which) I speak (is) the truth.—12.

सा. भा. ।—हे अक्षाः, वः—युष्माकं महतो गणस्य—सङ्घस्य योऽक्षः सेनानीः—नेता बभूव—भवति। व्रातस्य च। गणव्रातयोरल्पो भेदः। राजा—ईश्वरः प्रथमो मुख्यो बभूव। तस्मै—अक्षाय कृणोमि—अहम् अञ्जलिं करोमि। अतःपरं धना—धनानि अक्षार्थमहं न रुणध्मि—न सम्पादयामीत्यर्थः। एतदेव दर्शयति। अहं दश—दशसंख्याका अङ्गुलीः प्राचीः—प्राङ्मुखीः करोमि। तदेतदहम् ऋतम्—सत्यमेव वदामि नानृतं ब्रवीमीत्यर्थः ॥१२॥

दशाहं प्राचीः—*Cf.* AV. v. 28. 11 and Vāj. S. xvi. 64.

13

अक्षैः । मा । दीव्यः । कृषिम् । इत् । कृषस्व ।
वित्ते । रमस्व । बहु । मन्यमानः ॥
तत्र । गावः । कितव । तत्र । जाया ।
तत् । मे । वि । चष्टे । सविता । अयम् । अर्यः ॥१३॥

Giving serious attention (to my advice) play not with dice ; pursue agriculture ; delight in wealth (so acquired); there, O gambler, are cows ; there is a wife ; so has this (visible) lord Savitṛ declared to me.—13.

सा. भा. ।—हे कितव, बहु मन्यमानः—मद्वचने विश्वासं कुर्वन् त्वमक्षैर्मा दीव्यः—द्यूतं मा कुरु। कृषिमित्—कृषिमेव कृषस्व—कुरु। वित्ते—कृष्या सम्पादिते धने रमस्व—मतिं कुरु। तत्र—कृषौ गावो भवन्ति तत्र जाया भवति। तदेव धर्मरहस्यं श्रुतिस्मृतिकर्ता सविता—सर्वस्य प्रेरकोऽयम्—दृष्टिगोचरोऽर्यः—ईश्वरो विचष्टे—विविधमाख्यातवान् ॥१३॥

## 14

मित्रम् | कृणुध्वम् | खलु | मृळत | नः ।

मा | नः | घोरेण | चरत | अभि | धृष्णु ॥

नि | वः | नु | मन्युः | विशताम् | अरातिः ।

अन्यः | बभ्रूणाम् | प्रऽसितौ | नु | अस्तु ॥१४॥

Be friends with us (dice) ; bestow upon us happiness ; approach us not in terrible wrath ; let your anger light upon our enemies ; let our enemy fall under the bondage of tawny (dice).—14.

सा. भा. ।—हे अक्षाः, यूयं मित्रं कृणुध्वम्—अस्मासु मैत्रीं कुरुत। खल्विति पूरणः। नः—अस्मान्मृळत—सुखयत च। नः—अस्मान्धृष्णु—धृष्णुना। तृतीयार्थे प्रथमा। घोरेण—असह्येन माभि चरत—मा गच्छत। किञ्च, वः—युष्माकं मन्युः—क्रोधोऽरातिरस्माकं शत्रुर्निविशताम्—अस्मच्छत्रुषु तिष्ठतु। अन्यः—अस्माकं शत्रुः कश्चिद्बभ्रूणाम्—बभ्रुवर्णानां युष्माकं प्रसितौ—प्रबन्धने नु—क्षिप्रमस्तु—भवतु ॥१४॥

---

# Hymn No. 30

## PARAMĀTMAN

## (NĀSADĪYA-SŪKTA)[1]

x. 129

*Introductory Notes*

There are two hymns on cosmogony (x. 72 and 129) which explain creation as an evolution of the existent ( सत् ) from the non-existent ( असत् ). The first assertion that the existent sprang from the non-existent is found in x. 72. 2, 3. In the present hymn (x. 129), characterized by its sublime theme and profundity of the philosophical ideas contained in it, it is affirmed that nothing existed in the beginning; there was no atmosphere, nor the sky beyond; neither was then death nor immortality; there was then no distinction of day and night; all was void; darkness was shrouded in darkness; far and wide there was nothing but unfathomable and undistinguishable water (*cf.* x. 82. 6, 121. 7). 'Everything was like a sea without a light.' There was only One (the Primeval Being). Other than that One nothing else existed That One, which lay void and wrapped in nothingness, became developed and manifested by the power of *tapas*[2] (*cf.* note on the word, v. 3). In Him first sprang forth desire

[1] This hymn is repeated in Tait. Br. 2. 8. 9. 3ff.

Prof. Deussen expresses his appreciation of this hymn in words which deserve repetition :—'In its noble simplicity, in its loftiness of philosophic vision it is possibly the most admirable bit of philosophy of olden times.' For Max Müller's appreciation and feeling of wonder at the exalted philosophic ideas contained in this hymn, see his *Hist. of Anci. Skt. Lit.*, pp. 290ff. (ed. Pāṇini office, Allahabad) and *Six Systems of Hindu Philosophy*, p. 64. Against the views striving to prove the modernness of this hymn and similar other philosophical hymns, we propose to quote the pregnant words of Prof. Max Müller :—'It cannot be right to class every poem and every verse in which mystic or metaphysical speculations occur as modern, simply because they resemble the language of the Upaniṣads. These Upaniṣads did not spring into existence on a sudden. Like a stream which has received many a mountain torrent, and is fed by many a rivulet, the literature of the Upaniṣads proves, better than anything else, that the elements of their philosophical poetry came from a more distant fountain.' See also Kaegi, 'The Rigveda', p. 90, and n. 375, (p. 179); Ghate, Lectures on the Rigveda, p. 186; Muir, OST., Vol. IV, p. 4; Vol. V, p. 356; Macdonell, Ved. Mythology, p. 13; Goldstücker, Pāṇini, p. 144.

[2] *Cf.* x. 190, where it is said that from *tapas* was produced order (*ṛta*); then night, the ocean, the year; the creator (*dhātā*) produced in succession the sun and the moon, heaven and earth, air and ether.

(काम), the first germ of mind, which is the earliest link between the existent and the non-existent. Next (in v. 5) are spoken of the impregnating powers and mighty forces of receptive capacities and active energies, as the primal principles of creation. It is further said there that among the created objects some are living beings (जीवाः) and others are great elements, *e.g.*, the sky, the earth, the luminaries, etc., which were made for the enjoyment of the former. The former, the living creatures, again, as the enjoyers (भोक्तारः) are superior to the latter, the objects to be enjoyed (भोग्याः). But *in fine* it is asserted that nobody knows this secret of creation, not even the gods, who came into existence at a later stage of creation. The hymn concludes with a declaration of the existence of an All-surveying Being (अध्यक्ष) in the highest heaven, who alone knows this truth and none else does.

---

1

न | असत् | आसीत् | नो इति | सत् | आसीत् | तदानीम् ।
न | आसीत् | रजः | नो इति | विऽओमन् | परः | यत् ॥
किम् | आ | अवरीवरिति | कुह | कस्य | शर्मन् ।
अम्भः | किम् | आसीत् | गहनम् | गभीरम् ॥१॥

The non-existent was not, the existent was not ; then the world was not, nor the firmament,[1] nor that which is above (the firmament). How could there be any investing envelope, and where? of what (could there be) felicity ? How (could there be) the deep unfathomable water ?[2]—1.

सा. भा. ।—एकादशेऽनुवाके त्रयोविंशतिसंख्यकानि सूक्तानि। तत्र 'नासदासीदि'ति सप्तर्चं प्रथमं सूक्तं त्रैष्टुभम्। परमेष्ठी नाम प्रजापतिर्ऋषिः। वियदादिभावानां सृष्टिस्थिति-प्रलयादीनामत्र प्रतिपाद्यत्वात्तेषां कर्ता परमात्मा देवता। तथा चानुक्रान्तम्—'नासत् सप्त प्रजापतिः परमेष्ठी भाववृत्तं त्वि'ति। गतो विनियोगः॥

1 'There was no realm of air, no sky beyond it.'

2 'What covered in, and where? and what gave shelter? was there water, unfathomed depth of water?'—Griffith.

'तपसस्तन्महिनाजायतैकमि'त्यादिनाग्रे (३ मन्त्रे) सृष्टिः प्रतिपादयिष्यते। अधुना ततः प्रागवस्था निरस्तसमस्तप्रपञ्चा या प्रलयावस्था सा निरूप्यते। तदानीम्—प्रलयदशायामवस्थितं यदस्य जगतो मूलकारणं तन्नासत्—शशविषाणवन्निरुपाख्यं नासीत्। न हि तादृशात् कारणादस्य सतो जगत उत्पत्तिः सम्भवति। तथा नो सत्—नैव सत्। आत्मवत्सत्त्वेन निर्वाच्यमासीत्। यद्यपि सदसदात्मकं प्रत्येकं विलक्षणं भवति तथापि भावाभावयोः सहावस्थानमपि सम्भवति। कुतस्तयोस्तादात्म्यमित्युभयविलक्षणमनिर्वाच्यमेवासीदित्यर्थः। ननु नो सदिति पारमार्थिकसत्त्वस्य निषेधः। तर्ह्यात्मनोऽप्यनिर्वाच्यत्वप्रसङ्गः। अथोच्येत—न, 'आनीदवातमि'ति (२ मन्त्रे) तस्य सत्त्वमग्रे वक्ष्यते परिशेषान्मायाया एवात्र सत्त्वं निषिध्यत इति। एवमपि तदानीमिति विशेषणानर्थक्यं व्यवहारदशायामपि तस्याः पारमार्थिकसत्त्वाभावात्। अथ व्यावहारिकसत्त्वस्य तदापि व्यावहारिकसत्ता पृथिव्यादीनां भावानां विद्यमानत्वात् कथं नो सदिति निषेधः? तत्राह—'नासीद्रज' इत्यादि। 'लोका रजांस्युच्यन्त' इति यास्कः। अत्र च सामान्यापेक्षमेकवचनम्। व्योम्नो वक्ष्यमाणत्वात्तस्याधस्तनाः पातालादयः पृथिव्यन्ता नासन्नित्यर्थः। तथा व्योम—अन्तरिक्षं तदपि न नैवासीत्। पर इति सकारान्तं परस्तादित्यर्थे वर्तते। परशब्दाच्छान्दसोऽस्तातेरर्थेऽसिप्रत्ययः। परो व्योम्नः परस्तात्—उपरिदेशे द्युलोकप्रभृतिसत्यलोकान्तं यदस्ति तदपि नासीदित्यर्थः। अनेन चतुर्दशभुवनगर्भं ब्रह्माण्डं स्वरूपेण निषिद्धं भवति। अथ तदावरकत्वेन पुराणेषु प्रसिद्धानि यानि वियदादिभूतानि तेषामवस्थानप्रदेशं तदावरणनिमित्तं चाक्षेपमुखेन क्रमेण निषेधयति—'किमावरीव'रिति। किमावरणीयं तत्त्वमावरकभूतजातमावरीवः—अत्यन्तमावृणुयात्। आवार्याभावात्तदावरकमपि नासीदित्यर्थः। वृणोतेर्यङ्लुगन्ताच्छान्दसे लङि तिपि रूपमेतत्। यद्वा, किमिति प्रथमैव। किं तत्त्वमावरकमावृणुयात् आवार्याभावादाव्रियमाणवत् तदपि स्वरूपेण नासीदित्यर्थः। आवृण्वत् तत् तत्त्वं कुह—कुत्र देशेऽवस्थायावृणोति आधारभूतस्तादृशोऽपि नासीदित्यर्थः। किंशब्दात् सप्तम्यर्थे ह-प्रत्ययः। 'कु तिहो'रिति (पा॰ ७.२.१०४) प्रकृतेः क्वादेशः। कस्य शर्मन्—कस्य वा भोक्तुर्जीवस्य शर्मणि • सुखदुःखसाक्षात्कारलक्षणे वा निमित्तभूते सति तदावरकं तत्त्वमावृणुयात्। जीवानामुपभोगार्था हि सृष्टिः। तस्यां हि सत्यां ब्रह्माण्डस्य भूतैरावरणं प्रलयदशायाञ्च भोक्तारो जीवा उपाधिविलयात् प्रलीना इति कस्य कश्चिदपि भोक्ता न सम्भवतीत्यावरणस्य निमित्ताभावादपि तन्न घटत इत्यर्थः। एतेन भोग्यप्रपञ्चवद्भोक्तृप्रपञ्चोऽपि तदानीं नासीदित्युक्तम्भवति। किंशब्दादुत्तरस्य ङसः 'सावेकाच' इति प्राप्तस्योदात्तत्वस्य 'न गोश्वन्साववर्ण' इति प्रतिषेधः। 'सुपां सुलुगि'ति शर्मणः सप्तम्या लुक्। यद्यपि सावरणस्य ब्रह्माण्डस्य निषेधेन तदन्तर्गतमप्सत्त्वमपि निराकृतं तथापि 'आपो वा इदमग्रे सलिलमासीदि'त्यादिश्रुत्या (तै॰ स॰ ७.१.५.७) कश्चिदपां सद्भावमाशङ्केत। तं प्रत्याचष्टे—'अम्भः किमासीदि'ति। गहनम् दुष्प्रवेशं गभीरम्—दुःखस्थानमत्यगाधम्। ईदृशमम्भः किमासीत्? तदपि नैवासीदित्यर्थः। श्रुतिस्त्ववान्तरप्रलयविषया ॥१॥

नासदासीन्नो सदासीत्—*Cf.* Tait. Br. iii. 2. 9. 1ff. where it is stated that 'previously nothing existed, neither heaven nor earth nor atmosphere. That being non-existent resolved to come into being'; also Śat. Br. x. 5. 3. 1-3, 'नेव वा इदमग्रेऽसदासीन्नेव सदासीत्' and 'ऋषिणाभ्यनूक्तम्—नासदासीन्नो सदासीत् तदानीम्'.

असत्—(non-existent or non-entity) denotes an undeveloped or unmanifested state of the world; while the world clearly manifested or fully distinct with *'name'* and *'form'* ( नामरूपविशिष्टत्वेन स्पष्टप्रतीयमानं जगत् ) is designated by the term सत् (existent or entity). These two philosophical terms सत् and असत् seem to have been very familiar in the Vedas. *Cf.* x. 72. 2, 3, where we find it declared that in the beginning the non-existent was the source of the existent: 'देवानां पूर्व्ये युगेऽसतः सदजायत'. v. 2; 'देवानां युगे प्रथमेऽसतः सदजायत', v. 3; *cf.* also AV. xvii. 1. 9. 'असति सत् प्रतिष्ठितम् सति भूतं प्रतिष्ठितम्'; Again in AV. x. 7. 10, it is said that both non-entity and entity exist within the god Skambha (who is identified with Puruṣa) and in verse 25 of the same hymn, mention is made of these two words and non-entity is said to be embraced in, or a member of, the same divine being (Skambha). Tait. Up. (Bibl. Ind., p. 99) has this passage—'असद्वा इदमग्र आसीत् ततो वै सदजायत', there was at first non-entity, from that sprang entity; passages to the similar effect are also to be found in Chānd. Up. iii. 19. 1 and vi. 2. 1f.

अम्भः ··· गहनं गभीरम्—*Cf.* 'अप्रकेतं सलिलं सर्वमा इदम्', pāda 2, verse 3, this hymn; also x. 82. 6, -121. 7 (Hymn No. 27); TS. vii. 1.5.7. 'आपो वा इदमग्रे सलिलमासीत्'.

2

न | मृत्युः | आसीत् | अमृतम् | न | तर्हि ।
न | रात्र्याः | अह्नः | आसीत् | प्रऽकेतः ॥
आनीत् | अवातम् | स्वधया | तत् | एकम् ।
तस्मात् | ह | अन्यत् | न | परः | किम् | चन | आस ॥२॥

Death was not, nor at that period immortality, there was no indication of day or night; That one[1] unbreathed upon breathed of his own strength, other than that there was nothing else whatever.—2.

1 'That one thing breathless breathed by its own nature ( स्वधया ).'

सा. भा.।—ननूक्तस्य प्रतिसंहारस्य संहर्त्रपेक्षत्वात् स एव संहर्ता मृत्युर्विद्यत इत्यत आह—न मृत्युरासीदिति। ननु यदि स नासीत् तर्हि तदभावकृतममृतम्—अमरणं प्राणिनामवस्थानं तदानीमपि स्यात्। तत्राह—अमृतं न तर्हीति। तर्हि—तस्मिन् प्रतिहारसमये अयम्भावः। सर्वेषां प्राणिनां परिपक्वं भोगहेतुभूतं सर्वं कर्म यदोपभुक्तमासीत्तदा भोगाभावान्निष्प्रयोजनमिदं जगदिति परमेश्वरस्य मनसि सञ्जिहीर्षा जायते। तयैव स मृत्युः सर्वं जगत् संहरत इति किमनेन मृत्युना संहर्त्रा तदभावकृतं वा कथममरणं स्यादिति। एतदेवाभिप्रेत्य कठैराम्नायते,—'यस्य ब्रह्म च क्षत्रञ्चोभे भवत ओदनम्। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः' (२. २५) इति। नन्वेतस्य सर्वस्याधिकरणभूतः कालो विद्यत इत्यत आह—न रात्र्या इति। न रात्र्या अह्नश्च प्रकेतः—प्रज्ञानमासीत् तद्धेतुभूतयोः सूर्याचन्द्रमसोरभावात्। एतेनाहोरात्रनिषेधेन तदात्मको मासर्तु-संवत्सरप्रभृतिकः सर्वः कालः प्रत्याख्यातः। कथं तर्हि नो सदासीत्तदानीमिति कालवाची प्रत्ययः। उपचारादिति ब्रूमः। यथेदानीन्तननिषेधस्य कालोऽवच्छेदकस्तथा मायापि तदवच्छेदहेतुरित्यवच्छेदकत्वसाम्येनाकालेऽपि कालवाची प्रत्ययः। यदवादिष्म ब्रह्मणः परमार्थसत्त्वमग्रे वक्ष्यत इति तदिदानीं दर्शयत्यानीदिति। तत् सकलवेदान्तप्रसिद्धं ब्रह्मतत्त्वमानीत् प्राणितवत्। नन्वेवं प्राणनकर्तृजीवभावापन्नस्यैव ब्रह्मणः सत्त्वं स्यात् न विवक्षितस्य निरुपाधिकस्य ब्रह्मणः। अप्राणो ह्यमनाः शुद्ध इति तस्य प्राणसम्बन्धाभावात् तत्राह—आनीदवातमिति। अयमाशयः। आनीदित्यत्र धात्वर्थक्रिया तत्कर्ता तस्य च भूतकालसम्बन्ध इति त्रयोऽर्थाः प्रतीयन्ते। तत्र समुदायो न विधीयते यथाग्नेयोऽष्टाकपाल इति येन ब्रह्मणः सत्त्वं न स्यात्। किं तर्हि अनेन कर्तृत्वमनूद्य भूतकालसत्तालक्षणो गुणो विधीयते दध्ना जुहोतीति वाक्यान्तरविहिताग्निहोत्रानुवादेन तत्र गुणविधानम्। तत्राप्यनेन कर्तृत्वविशिष्टस्य न पूर्वकालसत्ता विधीयते तन्निषेधानुपपत्तिप्रसङ्गात्। अतोऽनेन कर्तृत्वेनेदानीन्तनेनोपलक्षितं यन्निरुपाधिकं परं ब्रह्म तस्यैव भूतकालसत्ता विधीयत इति न कश्चिद्दोष इति। नन्वीदृशस्य ब्रह्मणो मायया सह सम्बन्धासम्भवात् सांख्याभिमता स्वतन्त्रा सद्रूपा सत्त्वरजस्तमोगुणात्मिका मूलप्रकृतिरेवाभिमतेति कथं नो सदिति निषेधः। तत्राह स्वधयेति। स्वस्मिन् धीयते ध्रियते आश्रित्य वर्तत इति स्वधा माया तया तद्ब्रह्मैकमविभागापन्नमासीत्। 'सहयुक्तेऽप्रधाने' (पा॰ २. ३. १९) इति तृतीया। सहशब्दयोगाभावेऽपि सहार्थयोगे भवति 'वृद्धो यूने'ति (पा॰ १ २. ६५) निपातनाल्लिङ्गात्। अत्र प्रकृतिप्रत्ययाभ्यां तस्याः स्वातन्त्र्यं निवार्यते। यद्यप्यसङ्गस्य ब्रह्मणस्तया सह सम्बन्धो न सम्भवति तथापि तस्मिन्नविद्यया तत्स्वरूपमिव सम्बन्धोऽप्यध्यस्यते यथा शुक्तिकायां रजतस्य। एतेन सद्रूपत्वमपि तस्याः प्रत्याख्यातम्। ननु यदि माया ब्रह्मणा सहाविभागापन्ना तर्हि तस्या अनिर्वाच्यत्वाद्ब्रह्मणोऽपि तत्प्रसङ्ग इति कथं तस्य सत्त्वमुक्तमानीदवातमिति। ब्रह्मणो वा सत्त्वात्तस्या अपि सत्त्वप्रसङ्ग इति कथं नो सदासीदिति सत्त्वप्रतिषेधः। नैवम्। अयुक्तिदृष्टैक्यावभासेऽपि युक्त्या विविच्य मायांशस्यानिर्वाच्यत्वं

ब्रह्मणः सत्त्वं च प्रतिपादितम्। न च द्वन्द्वयाविति द्वावेव पदार्थावानीदवातं स्वधयेति तौ चेदङ्गीक्रियेते तत् किमपरमवशिष्यते यन्नासीद्रज इत्यादिना प्रतिषिध्येत तत्राह—तस्मादिति। तस्माद्—तस्मात् खलु पूर्वोक्तान्मायासहिताद्ब्रह्मणोऽन्यत् किञ्चन—किमपि वस्तु भूतभौतिकात्मकं जगन्नास—न बभूव। 'छन्दस्युभयथे'ति लिटः सार्वधातुकत्वादस्तेर्भू भावाभावः। ननु तदानीमन्यस्य सत्त्वनिषेधो न शङ्क्यः असत्त्वे चाप्रसक्तत्वान्न निषेधोपयोग इत्यत आह पर इति। परः—परस्तात् सृष्टेरूर्ध्वं वर्तमानमिदं जगत्तदानीं न बभूवेत्यर्थः। अन्यथोक्तरीत्या क्वचिदपि निषेधो न स्यादिति भावः ॥२॥

In this verse a being designated as the one is recognised as existing which may be regarded as answering to the primal entity of the Upaniṣads while the original non-existence of anything, whether non-entity or entity, asserted in the first verse, may signify that there was as yet no distinct manifestation of the one.

रात्र्याः—रात्री is the Ved. form of Class. रात्रि except in Nom. pl. (जस्), Pāṇ. iv. 1. 31.

आनीत्—impf. 3. sg. of √अन्, *to breathe.*

स्वधया—Sāy. takes स्वधा here to mean Māyā, the source of the phenomenal world; '(breathed) of his own strength'—Wilson; 'by his own power or energy'—Macdonell; 'self-supported' or 'self-sustained'—Muir.

3

तमः । आसीत् । तमसा । गूळ्हम् । अग्रे ।
अप्रऽकेतम् । सलिलम् । सर्वम् । आः । इदम् ॥
तुच्छेन । आभु । अपिऽहितम् । यत् । आसीत् ।
तपसः । तत् । महिना । अजायत । एकम् ॥३॥

There was darkness covered by darkness in the beginning, all this (world) was undistinguishable water; that empty united (world) which was covered by a mere nothing, was produced through the power of austerity.—3.

सा भा।—ननूक्तप्रकारेण यदि पूर्वमिदं जगन्नासीत् कथं तर्हि तस्य जन्म? जायमानस्य जनिक्रियायां कर्तृत्वेन कारकत्वात् कारकञ्च कारणावान्तरविशेष इति कारकस्य सतो नियतपूर्वक्षणवर्तित्वस्यावश्यम्भावात्। अथैतद्दोषपरिजिहीर्षया जनिक्रियायाः प्रागपि तद्विद्यत इत्युच्यते। कथं तस्य जन्म? अथ आह तमसा गूळ्हमग्र इति। अग्रे—सृष्टेः प्राक्

प्रलयदशायां भूतभौतिकं सर्वं जगत्तमसा गूढम्। यथा नैशं तमः सर्वपदार्थजातमावृणोति तद्वत्। आत्मतत्त्वस्यावरकत्वान्मायापरसंज्ञं भावरूपाज्ञानमत्र तम इत्युच्यते। तेन तमसा निगूढं संवृतं कारणभूतेन तेनाच्छादितं भवति। आच्छादकात्तस्मात्तमसो नामरूपाभ्यां यदाविर्भवनं तदेव तस्य जन्मेत्युच्यते। एतेन कारणावस्थायामसदेव कार्यमुत्पद्यते इत्यसद्वादिनोऽसत्कार्यवादिनो ये मन्यन्ते ते प्रत्याख्याताः। ननु कारणे तमसि तज्जगदात्मकं कार्यं विद्यते चेत् कथं नासोद्रज इत्यादिनिषेधः? तत्राह—तम आसीदिति। तमो भावरूपाज्ञानं मूलकारणं तद्रूपता तदात्मनाम्। यतः सर्वं जगत् प्राक् तम आसीदतो निषिध्यत इत्यर्थः। नन्वावरकत्वादावरकं तमः कर्तृ आवार्यत्वात् जगत् कर्म। कथं तयोः कर्मकर्त्रोस्तादात्म्यम्? तत्राह—अप्रकेतमिति। अप्रकेतम्—अज्ञायमानम्। अयमर्थः—यद्यपि जगतस्तमसश्च कर्मकर्तृभावो यौक्तिको विद्यते तथापि व्यवहारदशायामिव तस्यां दशायां नामरूपाभ्यां विस्पष्टं न ज्ञायत इति तादात्म्यवर्णनम्। अतएव मनुना स्मर्यते (१. ५)—'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्। अप्रतर्क्यमनिर्देश्यं प्रसुप्तमिव सर्वतः' इति। कुतो वा न प्रज्ञायते? तत्राह—सलिलम्। सल गतौ। औणादिक इलच्। इदं दृश्यमानं सर्वं जगत् सलिलं कारणेन सङ्गतमविभागापन्नम् आः—आसीत्। अस्तेर्लङि तिपि 'बहुलं छन्दसी'तीडभावे 'हल्ङ्याब्भ्यः' इति तिलोपे 'तिप्यनस्तेः' (पा॰ ८.२.७३) इति पर्युदासाद्दकाराभावः। यद्वा, सलिलमिति लुप्तोपमम्। सलिलमिव। यथा क्षीरेणाविभागापन्नं नीरं दुर्विज्ञानं तथा तमसाविभागापन्नं जगन्न शक्यविज्ञानमित्यर्थः। ननु विविधविचित्ररूपभूयसः प्रपञ्चस्य कथमतितुच्छेन तमसा क्षीरेण नीरस्येवाभिभवः? तथा तमोऽपि क्षीरवद्बलवदित्येवोच्यते तर्हि दुर्बलस्य जगतः सर्गसमयेऽपि नोद्भवसम्भव इत्यत आह—तुच्छ्येनेति। आ समन्ताद्भवतीत्याभु। तुच्छ्येन। छान्दसो यकारोपजनः। तुच्छेन—तुच्छकल्पनेन सदसद्विलक्षणेन भावरूपाज्ञानेनापिहितं छादितमासीत्। दधातेः कर्मणि निष्ठा। दधातेर्हिः। 'गतिरनन्तर' इति गतेः प्रकृतिस्वरत्वम्। एवमेकीभूतं कारणेन तमसाविभागतां प्राप्तमपि तत्कार्यजातं तपसः—स्रष्टव्यपर्यालोचनरूपस्य महिना—माहात्म्येनाजायत उत्पन्नम्। तपसः स्रष्टव्यपर्यालोचनरूपत्वं चान्यत्राम्नायते—'यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयन्तप' (मुण्ड॰ उ॰ १. १. ९) इति ॥३॥

तपसो महिना—'by the power of *tapas*, *i.e.*, by its own inherent heat,'—Prof. Max Müller, Anci. Skt. Lit., p. 561 (1st. ed.); 'by rigorous and intense abstraction'—Roth, his Lexicon, *s. v.* In support of Roth's interpretation can be cited Śat. Br. xi. 5. 8. 1. where Prajāpati is said to have desired (अकामयत) to propagate himself, and to have striven and practised rigorous abstraction (तपोऽतप्यत); in the same Brāhmaṇa (xiii. 7. 1. 11), the self-existent *Brahman* himself is similarly related to have practised *tapas* and to have offered himself in sacrifice. In the Tait. Br. (iii. 12. 3. 1), the gods are said to have obtained their rank by austerity ('तपसा देवा देवतामग्र आयन्'). *Cf.* also Tait. Up. ii. 6. 'स तपोऽतप्यत स तपस्तप्त्वेदं सर्वमसृजत् यदिदं किञ्च', He the Supreme

Soul desired,—let me be multiplied and produced. He, performed *tapas* and having done so created all this. Sañkar explains in his comm. on the passage, that knowledge is तपस् ('तप इति ज्ञानमुच्यते') and cites a Ved. text in support of his explanation: 'यस्य ज्ञानमयं तपः' (इति श्रुत्यन्तरात्). See the text quoted in Sāy.'s comm. above (last line). In x. 167. 1, Indra is said to have conquered heaven by *tapas* ('त्वं तपः परितप्याजयः स्वः') where the word can only mean rigorous abstraction. In the Mbh., Śānti P. v. 10836, Prajāpati is said to have created living beings by *tapas*, after having entered on religious observances or austerities.

Winternitz comments:—"*tapas* may here have its original meaning of 'heat' (some 'creative heat' analogous to the heat by which the brooding hen produces life from the egg) or it may mean the 'fervour of austerity'; or, as *Deussen* thinks, both meanings may be implied in the word." Sāy. explains तपस् to mean the meditation of the primeval creator, concerning the things to be created ('स्रष्टव्यपर्यालोचनरूपस्य तपसः').

4

कामः । तत् । अग्रे । सम् । अवर्तत । अधि ।
मनसः । रेतः । प्रथमम् । यत् । आसीत् ॥
सतः । बन्धुम् । असति । निः । अविन्दन् ।
हृदि । प्रतिऽइष्य । कवयः । मनीषा ॥४॥

In the beginning there was desire, which was the first seed of mind;[1] sages having meditated in their hearts have discovered by their wisdom the connection of the existent with the non-existent.—4.

सा. भा.।—ननूक्तरीत्या यदीश्वरस्य पर्यालोचनं जगतः पुनरुत्पत्तौ कारणम्, तदेव किंनिबन्धनमित्यत आह—कामस्तदग्र इति। अग्रे—अस्य विकारजातस्य सृष्टेः प्रागवस्थायां परमेश्वरस्य मनसि कामः समवर्तत—सम्यगजायत। सिसृक्षा जातेत्यर्थः। ईश्वरस्य सिसृक्षा वा किंहेतुकेत्यत आह—मनस इति। मनसः—अन्तःकरणस्य सम्बन्धिवासनाशेषेण मायायां विलीनेऽन्तःकरणे समवेतम्। सामान्यापेक्षमेकवचनम्। सर्वप्राण्यन्तःकरणेषु समवेतमित्यर्थः। एतेनात्मनो गुणाधारत्वं प्रत्याख्यातम्। तादृशं रेतः—भाविनः प्रपञ्चस्य बीजभूतं प्रथममतीते कल्पे प्राणिभिः कृतं पुण्यात्मकं कर्म यत्—यतः कारणात् सृष्टिसमय आसीत्—अभवत्। भूष्णु वर्धिष्णु अजायत परिपक्वं सत् फलोन्मुखमासीदित्यर्थः। तत्—ततो हेतोः फलप्रदस्य सर्वसाक्षिणः कर्माध्यक्षस्य परमेश्वरस्य मनसि सिसृक्षाजायतेत्यर्थः। तस्याञ्च जातायां स्रष्टव्यं पर्यालोच्य ततः सर्वं जगत् सृजति। तथा चाम्नायते—'सोऽकामयत बहुः स्यां प्रजायेये'ति। 'स तपोऽतप्यत

[1] Thereafter rose Desire in the beginning, Desire, the primal seed and germ of spirit. —Griffith.

स तपस्तप्त्वेदं सर्वमसृजत यदिदं किञ्चे'ति (तै° आ° ८. ६) श्रुत्यात्मनेत्थमवगमितेऽर्थे विद्वदनुभवमप्यनुग्राहकत्वेन प्रमाणयति सत इति। सतः—सत्त्वेनेदानीमनुभूयमानस्य सर्वस्य जगतो बन्धुम्—बन्धकं हेतुभूतं कल्पान्तरे प्राण्यनुष्ठितं कर्मसमूहं कवयः क्रान्तदर्शिना अतीतानागतवर्तमानाभिज्ञा योगिनो हृदि—हृदये निरुद्धया मनीषा—मनीषया बुद्ध्या। 'सुपां सुलुगि'ति तृतीयाया लुक्। प्रतीष्य—विचार्य। 'अन्येषामपी'ति सांहितिको दीर्घः। असति—सद्विलक्षणेऽव्याकृते कारणे निरविन्दन्—निष्कृष्यालभन्त विविच्याजानन्नित्यर्थः ॥४॥

कामः—'will', the desire for creation; Schopenhauer, Deussen and others assume this interpretation. Winternitz takes this term very lightly to mean 'sexual desire' and comments:—'As sexual desire leads to the procreation and birth of beings, so these ancient thinkers considered sexual desire as the primal source of all existence.' This view is hardly acceptable.

The commentator on the Tait. Br. ii. 8. 9. 5 (Bibl. Ind., p. 928) says: 'desire is the cause of all action' (कामस्य सर्वव्यवहारहेतुत्वम् वाजसनेयिनः समामनन्ति). This Puruṣa is himself actuated by desire ('काममय एवायं पुरुषः', Bṛ. Āṛn. Up., p. 854). Vyāsa too declares in his smṛti: 'that which binds this world is desire, it has no other bond ('कामबन्धनमेवेदं नान्यदस्तीह बन्धनम्'). The same thing, too, is seen within our own observation: for it is only after a man has first desired something that he will strive after it.' In numerous passages of the Brāhmaṇas and Upaniṣads, we are told that the first step in the creation was that Prajāpati or Brahman 'desired' (अकामयत). *cf.* also the texts cited in the note on तपस्, verse 3.

सतो बन्धुमसति, etc.—They found the origin of the evolved world in the unevolved; see the texts quoted in connection with the terms सत् and असत्, verse 1.

5

तिरश्चीनः । विऽततः । रश्मिः । एषाम् ।
अधः । स्वित् । आसी३त् । उपरि । स्वित् । आसी३त् ॥
रेतःऽधाः । आसन् । महिमानः । आसन् ।
स्वधा । अवस्तात् । प्रऽयतिः । परस्तात् ॥५॥

There ray was stretched out, whether across, or below, or above; (some) were shedders of seed, (others) were mighty; food was inferior, the eater was superior.[1]—5.

[1] There were begetters, there were mighty forces, free action here below and energy up yonder.—Griffith.

सा. भा ।—एवमविद्याकामकर्माणि सृष्टेर्हेतुत्वेनोक्तानि। अधुना तेषां स्वकार्यजनने शैघ्र्यं प्रतिपाद्यते। येयं 'नासदासीदि'त्यविद्या प्रतिपादिता यश्च 'कामस्तदग्र' इति कामो 'मनसो रेतः प्रथमं यदासीदि'ति यत्कर्म एषाम्—अविद्याकामकर्मणां वियदादिभूतजातानि सृजतां रश्मिः—रश्मिसदृशः यथा सूर्यरश्मिरुदयानन्तरं निमेषमात्रेण युगपत्सर्वं जगद्व्याप्नोति तथा शीघ्रं सर्वत्र व्याप्नुवन् यः कार्यवर्गो विततो विस्तृत आसीत्। 'स्विदासीदि'ति वक्ष्यमाणमत्रापि सम्बध्यते। 'विचार्यमाणानाम्' (पा° ८. २. ९७) इति प्लुतः। तत्रोदात्त इत्यनुवृत्तेः स चोदात्तः। स्विदिति वितर्के। स कार्यवर्गः प्रथमतः किं तिरश्चीनः—तिर्यगवस्थितो मध्ये स्थित आसीत्? किं वा अधः—अधस्तात् आहोस्विदुपरि—उपरिष्टात् किमासीत्? 'उपरि-स्विदासीदिति च' (पा° ८. २. १०२) इत्यनुदात्तः प्लुतः।

'आत्मन आकाशः सम्भूत आकाशाद्वायुरि'त्यादिकया (तै° आ° ८. १) पञ्चमीश्रुत्या तत उद्गातारं ततो होतारमितिवत् क्रमप्रतिपत्तौ सत्यामपि विद्युत्प्रकाशवत् सर्गस्य शीघ्रव्यापनेन तस्य क्रमस्य दुर्लक्षणत्वादेतेषु त्रिषु स्थानेषु प्राथम्यं कुत्रेति विचार्यते। एवं नाम शीघ्रं सर्वतो दिक्षु सर्गो निष्पन्न इत्यर्थः। एतदेव विभजते—सृष्टेषु कार्येषु मध्ये केचिद्भावा रेतोधाः—रेतसो बीजभूतस्य कर्मणो विधातारः कर्तारो भोक्तारश्च जीवा आसन्, अन्ये भावा महिमानः। स्वार्थिक इमनिच्। महान्तो वियदादयो भोग्या आसन्। एवं मायासहितः परमेश्वरः सर्वं जगत् सृष्ट्वा स्वयं चानुप्रविश्य भोक्तृभोग्यादिरूपेण विभागं कृतवानित्यर्थः। अयमेवार्थस्तैत्तिरीयके (तै° आ° ८. ६.) 'तत् सृष्ट्वा तदेवानुप्राविशदि'त्यारभ्य प्रतिपाद्यते। तत्र च भोक्तृभोग्ययोर्मध्ये स्वधा। अन्न-नामैतत्, भोग्यप्रपञ्चोऽवस्तात्—अवरो निकृष्ट आसीत्। प्रयतिः—प्रयतिता भोक्ता—परस्तात् पर उत्कृष्ट आसीत्। भोग्यप्रपञ्चं भोक्तृप्रपञ्चस्य शेषभूतं कृतवानित्यर्थः। 'विभाषा परावराभ्याम्' (पा° ५. ३. २९) इति प्रथमार्थेऽस्तातिः। 'अस्ताति चे'त्यवर-शब्दस्यावादेशः (पा° ५. ३. ४०)। अवस्तादिति संहितायामीषा अक्षादित्वात् प्रकृतिभावः ॥५॥

रश्मि:—Prof. Aufrecht suggested that रश्मि may have here the sense of thread, or cord, and not of ray. Prof. Macdonell adopts this interpretation and in support compares it with बन्धुम् (the bond), pāda 3, verse 4, also with the passage viii. 25. 18 ('परि यो रश्मिना दिवो ऽन्तान् ममे पृथिव्याः') and with the expression 'सूत्रं विततम्' (in AV. x. 8. 37)—*Ved. Reader*, p. 210. Sāy. explains रश्मि to mean 'a flash of light.' The accepted notion of creation is that things were created in a serial order (from आत्मा came आकाश, from आकाश sprang वायु and so forth), but the development of the creation was so sudden and quick like a flash of lightning, that the series could not be distinguished.

रेतोधा आसन् महिमान आसन्, etc.—'रेतोधाः' and 'महिमानः' are contrasted as male and female cosmogonic principles, to which correspond *resp.* 'प्रयतिः' and 'स्वधा', (pāda 4), In TS. iv. 3. 11. 1 mention is made of 'त्रयो महिमानाः' connected with fertility.—Macdonell, *Ved. Reader*, p. 210.

Acc. to Sāy. the mg. is that among the created objects some were living creatures, others were great, such as the sky, etc., the former being the enjoyers (भोक्तारः) the latter the things to be enjoyed (भोग्याः). So the creation was distinguished as the food and the feeder. Sāy. takes स्वधा in the sense of food, see Nigh. 2. 7.

स्वधा अवस्तात्—Mark that in the above text धा of स्वधा is not joined in sandhi with the following vowel. For similar examples of non-contraction in the text of ṚV. *cf.* 'मनीषा अग्निः', i. 70. 1; 'मनीषा अभ्यर्चति', i. 101. 7.

## 6

कः । अद्धा । वेद । कः । इह । प्र । वोचत् ।
कुतः । आऽजाता । कुतः । इयम् । विऽसृष्टिः ॥
अर्वाक् । देवाः । अस्य । विऽसर्जनेन ।
अथ । कः । वेद । यतः । आऽबभूव ॥६॥

Who really knows? who in this world may declare it: whence was this creation, whence was it engendered? The gods (were) subsequent to the (world's) creation; so who knows whence it arose?—6.

सा. भा.।—एवं भोक्तृभोग्यरूपेण सृष्टिः संग्रहेण प्रतिपादिता। एतावद्वा इदमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नाद इतिवत्। अथेदानीं सा सृष्टिर्दुर्विज्ञानेति न विस्तरेणाभिहितेत्याह—को अद्धेति। कः पुरुषोऽद्धा—पारमार्थ्येन वेद—जानाति। को वेहास्मिँल्लोके प्र वोचत्—प्रब्रूयात्। इयं दृश्यमाना विसृष्टिः विविधा भूतभौतिकभोक्तृभोग्यादिरूपेण बहुप्रकारा सृष्टिः कुतः—कस्मादुपादान-कारणात् कुतः—कस्माच्च निमित्तकारणात्—आजाता समन्ताज्जाता प्रादुर्भूता? एतदुभयं सम्यक् को वेद को वा विस्तरेण वक्तुं शक्नुयादित्यर्थः। ननु देवा अजानन्तः, सर्वज्ञास्ते ज्ञास्यन्ति वक्तुं च शक्नुवन्तीत्यत आह—अर्वागिति। देवाश्चास्य जगतो विसर्जनेन वियदादिभूतोत्पत्त्यनन्तरं विविधं यद्भौतिकं सर्जनं सृष्टिस्तेनार्वाक—अर्वाचीनाः कृताः भूतसृष्टेः पश्चाज्जाता इत्यर्थः। तथाविधास्ते कथं स्वोत्पत्तेः पूर्वकालीनां सृष्टिं जानीयुः, अजानन्तो वा कथं प्रब्रूयुः। उक्तं दुर्विज्ञानत्वं निगमयति—अथैवं सति देवा अपि न जानन्ति किल। तद्व्यतिरिक्तः को नाम मनुष्यादिः वेद—तज्जगत्कारणं जानाति यतः—कारणात् कृत्स्नं जगत् आबभूव—अजायत ॥६॥

अर्वाग् देवाः, etc.—The gods came into existence at a later stage of creation, and therefore can know nothing of the origin of the universe, which they did not witness. Compare x. 97. 1, where certain plants are said to be anterior to the gods by three yugas ('या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा').

7

इयम् । विऽसृष्टिः । यतः । आऽबभूव ।
यदि । वा । दधे । यदि । वा । न ॥
यः । अस्य । अधिऽअक्षः । परमे । विऽओमन् ।
सः । अङ्ग । वेद । यदि । वा । न । वेद ॥७॥

He, from whom this creation arose, may compr-hend it, or he may not (no one else can); he who is its superintendent in the highest heaven, assuredly knows, or if he knows not (no one else does).[1]—7.

सा. भा.।—उक्तप्रकारेण यथेदं जगत्सर्जनं दुर्विज्ञानमेवं सृष्टं तज्जगद्दुर्धरमपीत्याह इयमिति। यतः—उपादानभूतात् परमात्मन इयं विसृष्टिः—विविधा गिरिनदीसमुद्रादिरूपेण विचित्रा सृष्टिराबभूव—आजाता सोऽपि किल यदि वा दधे धारयति यदि वा न धारयति। एवं च को नामान्यो धर्तुं शक्नुयात्। यदि धारयेदीश्वर एव धारयेन्नान्य इत्यर्थः। एतेन कार्यस्य धारयितृत्वप्रतिपादनेन ब्रह्मण उपादानकारणत्वमुक्तं भवति। तथा च पारमार्षं सूत्रम्—'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' (१.४.२३) इति। यद्वा, अनेनार्धर्चेन पूर्वोक्तं सृष्टेर्दुर्ज्ञानत्वमेव द्रढयति, को वेदेत्यनुवर्तते। इयं विविधा सृष्टिर्यत आ बभूव—आसमन्तादजायतेति को वेद? न कोऽपि। नास्त्येव जगतो जन्म कदाचिदनीदृशं जगदिति बहवो भ्रान्ता भवन्त्यपि। यतः। 'जनिकर्तुः प्रकृति'रित्यपादानसंज्ञायां पञ्चम्यास्तसिल्। यस्मात् परमात्मन उपादानभूतादाबभूव तं परमात्मानं को वेद? न कोऽपि। प्रकृतितः परमाणुभ्यो वा जगज्जन्मेति हि बहवो भ्रान्ताः। तथा स एवोपादानभूतः परमात्मा स्वयमेव निमित्तभूतोऽपि सन् यदि वा दधे—विदधे इदं जगत् ससर्ज यदि वा न ससर्ज। असन्दिग्धे सन्दिग्धवचनमेतच्छास्त्राणि चेत् प्रमाणं स्युरिति यथा, स एव विदधे, तं को वेद? अजानन्तोऽपि बहवो जडात् प्रधानादकर्तृकमेवेदं जगत् स्वयमजायतेति विपरीतं प्रतिपन्ना विदधतो विधानमजानन्तोऽपि। स एवोपादानभूत इत्यपि को वेद? न

[1] 'He who controls this world in highest heaven verily knows it, or perhaps he knows not.'—Griffith.

कोऽपि। उपादानादन्यस्तटस्थ एवेश्वरो विद्ध इति हि बहवः प्रतिपन्नाः। देवा अपि यन्न जानन्ति तदर्वाचीनानामेषां तत्परिज्ञाने कैव कथेत्यर्थः। यद्येवं जगत्सृष्टिरत्यन्तदुरवबोधना तर्हि सा प्रमाणपद्धतिमध्यास्त इत्याशङ्क्य तत्सद्भाव ईश्वरो वेदं प्रमाणयति—'यो अस्ये'ति। अस्य—भूतभौतिकात्मकस्य जगतो योऽध्यक्षः—ईश्वरः परमे—उत्कृष्टे सत्यभूते व्योमन्—व्योमन्याकाश आकाशवन्निर्मले स्वप्रकाशे। यद्वा, अवतेस्तर्पणार्थात् 'अन्येभ्योऽपि दृश्यन्त' इति मनिन्। 'नेड्वशि कृती'तीट्प्रतिषेधः। 'ज्वरत्वरे'त्यादिना वकारोपधयोरूट्। सप्तम्या लुक्। 'न ङिसम्बुद्ध्यो'रिति नलोपप्रतिषेधः। व्योमनि—विशेषेण तृप्ते निरतिशयानन्दस्वरूप इत्यर्थः। यद्वा, अवतिर्गत्यर्थः। व्योमनि—विशेषेण गन्तव्ये देशकालवस्तुभिरपरिच्छिन्न इत्यर्थः। अथवा अवतिर्ज्ञानार्थः। व्योमनि—विशेषेण ज्ञातरि विशिष्टज्ञानात्मनि। ईदृशे स्वात्मनि प्रतिष्ठितः। श्रूयते हि सनत्कुमारनारदयोः संवादे—'स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि' (छा° उ° ७. २४) इति। ईदृशो यः परमेश्वरः सो अङ्ग। अङ्गेति प्रसिद्धौ। सोऽपि नाम वेद—जानाति। यदि वा न वेद—न जानाति को नामान्यो जानीयात्? सर्वज्ञ ईश्वर एव तां सृष्टिं जानीयात् नान्य इत्यर्थः ॥७॥

Acc. to traditional Indian interpretation this verse asserts the existence of the all-seeing, omniscient Supreme Being in the highest heaven, who alone knows the great secret of creation. See the concluding lines, Introd. notes.

---

# ERRATA.

| PAGE. | LINE. | FOR | READ |
|---|---|---|---|
| 99 | 25-26 (n. 2) | √अब्र् | √अभ्र् |
| 103 | 13 | यज्ञस्य | यज्ञश्च |
| " | 17 | शं तनवे | शंतनवे |
| 105 | 22 | 'लेटि सिब्' | लेटि 'सिब्' |
| 106 | 7 | brings about | brings |
| 109 | 6 | शाठ्या | शाट्या |
| 110 | 18 | वस्त | वस्तः ( र् ) |
| 112 | 12 | ऋच | ऋच |
| " | 18 | *Upasada* | *Upasad* |
| 113 | 17 | नपातम् | नपात् |
| 115 | 22 | mayst | mayest |
| 116 | 2 | अवस्येवे | अवस्यवे |
| 117 | 1 | मित्रगोः | मित्रगः |
| " | 3 | etym. | mg. |
| 118 | 6 (n. 1) | Grassman, in S. V. | Grassmann, *s. v.* |
| 119 | 7 | *Vajravāhu* | *Vajrabāhu* |
| 132 | 2 | पार्थिरानि | पार्थिवानि |
| 133 | 1 | Ahi and the son of Danu lying there, putting | Ahi, the son of Danu lying there and putting |
| " | 29 | सहवत्सा | सहवत्सा |
| 157 | 4 | three | there |
| 158 | 6 | मघोनौ | मघोनी |
| 180 | 22 | matronymic | metronymic |
| 201 | 6 (*f. n.*) | p. 8 | p. 81. |
| 249 | 11 | add 'Hist. of Ind. Lit.' after Winternitz | |
| 252 | 22 | अम्रुवः here | अम्रुवः in v. 8 |
| 252 | 29 | it ice | its juice |

| Page. | Line. | For | Read |
|---|---|---|---|
| 254 | 19 | the are | they are |
| 256 | 5 | सम्यग् ज्ञातं | सम्यग ज्ञानं |
| 263 | 7 | attle | battle |
| 310 | 9 | द्रष्टी | द्रष्टी |
| 311 | 6 | आपोतव्य | अभिपोतव्य |

---